जामातरं[1] वदान्ति । न मातुः परदैवतम् । माता मे बहून्खलु क्लेशान्सहत मत्कृते । मित्र, चिरं प्रत्यैक्षे त्वां। कदा न्यवर्तथाः स्वसुर्गृहात्? ह्य एव न्यवर्तेऽहम् । धातः, त्वयि[2] रक्षितारि कुतोऽस्माकं भयम् ? उदिते[3]ऽपि सवितरि शय्यां नामुञ्चत माधवः ।

क्षमा शत्रौ च मित्रे च यतीनामेव भूषणम् ।
शाम्येत्प्रत्यपकारेण नोपकारेण दुर्जनः ।

यावज्जीवमहं मौनी ब्रह्मचारी च मे पिता ।
माता तु मम वन्ध्यैव पुत्रहीनः पितामहः ।। अयं वदतो व्याघातः

यत्र विद्वज्जनो नास्ति श्लाघ्यस्तत्राल्पधीरपि ।
निरस्तपादपे देशे एरण्डोऽपि द्रुमायते ।।

कन्या वरयते रूपं माता वित्तं पिता श्रुतम् ।
बान्धवाः कुलमिच्छन्ति मिष्टान्नमितरे जनाः ।।

पिता रक्षति कौमारे भर्ता रक्षति यौवने[4] ।
रक्षन्ति स्थाविरे[4] पुत्रा न स्त्री स्वातंत्र्यमर्हति ।।

यदि न स्यान्नरपतिः सम्यङ् नेता, ततः प्रजा ।
अकर्णधारा जलधौ विप्लवेतेह नौरिव ।।

मातरं पितरं भार्यां यः सत्यज्य विवर्तते ।
निगडैर्बन्धयित्वा तं योजयेन्मार्गसंसृतौ ।।

आचार्यश्च पिता चैव माता भ्राता च पूर्वजः ।
नार्तेनाप्यवमन्तव्या ब्राह्मणेन विशेषतः ।।

अर्थस्य पुरुषो दासो दासस्त्वर्थो न कस्यचित् ।
अतोऽर्थाय यतेतैव सर्वदा यत्नमास्थितः ।।

---

१. § ३०५ (अ). २. ३१७ (४). ३. § २५८. ४. § १९९ (२).

## शब्दार्थसंग्रह

अतीत वि. गेलेल.
अर्ह् १ प. पात्र असणें.
अल्पधी वि. अल्पबुद्धीचा.
अवमन्तव्य वि. अपमान करण्यास योग्य.
आर्त वि. पीडिलेला.
आस्थित वि. आश्रय केलेला.
उदित वि. उगवलेला.
उपरुद्ध वि. आडकाठी केलेला.
कति वि. किती.
कर्णधार पुं. नावाडी.
कृत्वा अ. (वर) ठेवून.
क्रोड न. छाती.
कौमार न. कुंवारपण.
जन् (समनु) ४ आ. वळणावर जन्मणें.
जलधि पुं. समुद्र.
जामातृ पुं. जांवई.
ततस् अ. तर.
त्रि वि. तीन.
दुहितृ स्त्री. मुलगी, कन्या.
दृश् १ प. प्रयो. दाखविणें.
दैवत न. देवता.
द्रुम पुं. झाड.
द्रुह् (अभि) ४ प. द्वेष करणें.
धातृ पुं. ब्रह्मदेव.
नरपति पुं. राजा.
निगड पुं. बेडी.
निरस्त वि. नाहींसें केलेलें, शून्य.
नृ पुं. मनुष्य.
नेतृ पुं. पुढारी.
न्याय पुं. तर्कशास्त्र.
पथ्य वि. हितकर.
पाण्डित्य न. विद्वत्ता.
पितामह पुं. आजा.
पितृ पुं. बाप.
पूर्वज वि. आधीं जन्मलेला, वडील.
प्रवाद पुं. लोकवार्ता.
प्लु (वि) १ आ. बुडणें.
बन्धयित्वा अ. बांधून.
ब्रह्मचारिन् वि. अविवाहित.
भर्तृ पुं. नवरा, मालक.
भू (अनु) १ प. अनुभवणें; भोगणें.
भ्रातृ पुं. भाऊ.
मातृ स्त्री. आई.
मार्ग पुं. योग्य मार्ग.
मिष्ट वि. गोड, मधुर.
मुच् (मुञ्च्) ६ उ. सोडणें; टांकणें.
मौनिन् वि. मुका.
यावज्जीवम् अ. आयुष्यभर, जन्मभर.
युज् ७ उ. प्रयो. लावणें.
यौवन न. तरुणपणा.
रक्ष् १ प. सांभाळणें, रक्षणें.
रक्षितृ पुं. राखणारा.
वक्तृ पुं. वक्ता.
वन्ध्य वि. वांझ.
विद्वज्जन पुं. विद्वान लोक.
वृत् (वि) १ आ. भटकणें.
शय्या स्त्री. अंथरूण.
श्रुत न. विद्या, विद्वत्ता.
श्रोतृ पुं. ऐकणारा, श्रोता.
श्लाघ्य वि. स्तुतीला योग्य.
संत्यज्य अ. टाकून.
सभ्य पुं. सभासद.
सम्यक् अ. चांगल्या रीतीनें.

**सवितृ** पुं. सूर्य. **सह्** १ आ. सहन करणें. **स्थाविर** न. म्हातारपण.
**संवत्सर** पुं. वर्ष. **सुकर** वि. सोपें. **स्वसृ** स्त्री. बहीण.
**संसृति** स्त्री.प्रवाह, गति. **स्त्री** स्त्री. बायको, स्त्री. **ह्यस्** अ. काल.

## त्रयोदशः पाठः

**पूर्वतयारीः**—इकारान्त, उकारान्त व ऋकारान्त न. शब्द; कर्मणि व भावेप्रयोग-गणसापेक्ष काळ व अर्थ. §§ ५१, ५४, २६२ ते २६४, ३०१ ते ३०३.

**पश्याम्यहं जनसंमर्दं मार्गे। दृश्यते मया जनसंमर्दो मार्गे। मूषकान् भक्षयति मार्जारः। मूषका भक्ष्यन्ते मार्जारेण। जनास्त्वामुपहसन्ति। जनैस्त्वमुपहस्यसे। क्वाधुना गच्छसि। क्वाधुना गम्यते। त्यज शोकं, आलंबस्व धैर्यम्। त्यज्यतां शोकः, आलंब्यतां धैर्यम्। मां ह्योऽदशद् वृश्चिकः। अहं ह्योऽदश्ये वृश्चिकेन। अल्पा एव नराः शतं वर्षाणि जीवन्ति। अल्पैरेव नरैः शतं वर्षाणि जीव्यते। स्वगृहनिर्विशेषं स्थीयतामत्र। भारं उह्यते गर्दभेन। अपह्रियेखलु परिश्रमजनितया निद्रया। अकामस्य क्रिया काचिद् दृश्यते नेह कर्हिचित्। अन्तरेण पुरुषकारं न किंचिल्लभ्यते। अजीर्णे भेषजं वारि जीर्णे वारि बलप्रदम्। सुखमुपदिश्यते परस्य। अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत्। पुरुषेषु न्यासा निक्षिप्यन्ते न पुनर्गेहेषु। नहि काकिन्यां नष्टायां तदन्वेषणं कार्षापणेन क्रियते। हस्तकंकणं किं दर्पणे प्रेक्ष्यते? न लघुष्वपि कर्तव्येष्वनादरः कार्यः। स स्निग्धोऽकुशलान्निवारयति यः। गुर्वपि विरहदुःखमाशाबन्धः साहयति। मुण्डितमुण्डो नक्षत्राणि पृच्छसि!**

**नहि दोषाः सन्तीति परिभाषा न कर्तव्या, लक्षणं वा न प्रणेयम्। नहि भिक्षुकाः सन्तीति स्थाल्यो नाधिश्रीयन्ते। न च मृगाः सन्तीति यवा नोप्यन्ते।** पा. महाभाष्यं.

---

१. § ३०७ (अ). २. § ३१४ (२). ३. § ३१४ (८). ४. अत्रे अध्याहृतं § ३१९ (५). ५. चतुर्थ्यर्थे षष्ठी. ६. § ३२७ (३). ७. १०९ (५)

आहारे व्यवहारे च त्यक्तलज्जः सुखी भवेत् ।
स्वादुकामुक कामानां वैतृष्ण्यं किं न गच्छसि ।
मधु पश्यसि दुर्बुद्धे प्रपातं नानुपश्यसि ।
यवाः प्रकीर्णा न भवन्ति शालयः ।
अन्यदुप्तं जातमन्यदित्येतन्नोपपद्यते ।
उप्यते यद्धि यद् बीजं तत्तदेव प्ररोहति ॥ मनु.
सर्पः क्रूरः खलः क्रूरः सर्पात् क्रूरतरः खलः ।
मंत्रौषधिवशः सर्पः खलः केन निवार्यते ॥
अहो खलभुजंगस्य विचित्रोऽयं वधक्रमः ।
अन्यस्य दशति श्रोत्रमन्यः प्राणैर्वियुज्यते ॥
यथा हि मलिनैर्वस्त्रैर्यत्रकुत्रोपाविश्यते ।
एवं चलितवृत्तस्तु वृत्तशेषं न रक्षति ॥
"प्रियाभ्युपगते[1] द्यूते पाण्डवा मधुसूदन ।
जिताः[2] शकुनिना राज्यं तत्र किं मम दुष्कृतम् ॥१॥
यत् पुनर्द्रविणं[2] किंचित्तत्राजीयन्त पाण्डवाः ।
तेभ्य[3] एवाभ्यनुज्ञातं तत्तदा मधुसूदन ॥ २ ॥"
इति कृष्णमभ्यभाषत दुर्योधनः । म. भा.

गुणाः सर्वत्र पूज्यन्ते दूरेऽपि वसतां सताम् ॥
केतकीगंधमाघ्रातुं स्वयं गच्छन्ति षट्पदाः ॥
अनाहूताः स्वयं यान्ति रसास्वादविलोलुपाः ।
निवारिता न गच्छन्ति माक्षिका इव भिक्षुकाः ॥

कर्णामृतं सूक्तिरसं विमुच्य
दोषेषु यत्नः सुमहान् खलस्य ।
अवेक्षते केलिवनं प्रविश्य
क्रमेलकः कंटकजालमेव ॥ विक्रमांकदेवचरितं ।

---

१. § ४३९ आ. २. § ३०३, ३१४ (२). ३. तृतीयार्थी चतुर्थी अनियमित.

अनुसरति करिकपोलं भ्रमरः श्रवणेन ताड्यमानोऽपि ।
गणयति न तिरस्कारं दानांधितलोचनो नीचः ।

गांगमंबु सितं, अंबु यामुनं
कज्जलाभं, उभयत्र मज्जतः ।
राजहंस तव सैव शुभ्रता,
चीयते न च, न चापचीयते ॥

## शब्दार्थसंग्रह

**अकाम** वि. इच्छारहित.
**अकुशल** न. अकल्याण; पाप.
**अजीर्ण** वि. न पचलेलें.
**अनादर** पुं. निष्काळजीपणा; दुर्लक्ष.
**अन्तरेण** अ. खेरीज.
**अन्य–अन्य** स. एक - दुसरा.
**अन्वेषण** न. शोधणें.
**अभ्यनुज्ञात** वि. कबूल केलेलें.
**अभ्युपगत** वि. कबूल केलेलें.
**अर्क** पुं. रुई.
**उप्त** (वप्+त)वि.पेरलेलें.
**कंकण** पुं.न.कडें;कांकण.
**कर्हिचित्** अ. केव्हांहि.
**काकिनी** स्त्री. कवडी.
**कार्य** वि. करण्यास योग्य.
**कार्षापण** पुं., नं. रुपया; पावली.
**किमर्थम्** अ. कशासाठीं.
**क्रम** पुं. प्रकार, रीत.
**क्षिप्** ( नि )६उ.(ठेव) ठेवणें.
**गुरु** वि. जड; भारी; मोठें.
**गेह** न. घर.
**चलित** वि. ढळलेला.
**जनित** वि. उत्पन्न केलेलें.
**जीर्ण** वि. पचलेलें.
**दर्पण** पुं. आरसा.
**दुर्बुद्धि** वि. मूर्ख.
**दुष्कृत** न. वाईट कृत्य.
**दृश्** (अनु) १ प. पुढचें पाहणें; परिणाम जाणणें.
**द्यूत** न. जुगार.
**द्रविण** न. द्रव्य, पैसा.
**नष्ट** वि. नाहींसें झालेलें, हरवलेलें.
**निद्रा** स्त्री. झोंप.
**निर्विशेष** वि. भेदरहित, तुल्य.
**न्यास** पुं. ठेव.
**परिभाषा** स्त्री. विशिष्ट शास्त्रीय शब्द.
**पाण्डव** पुं. पाण्डु राजाचा पुत्र.
**पुनर्** अ. परंतु.
**पुरुषकार** पुं. उद्योग; पराक्रम.
**प्रकीर्ण** वि. विखुरलेलें; पेरलेलें.
**प्रणेय** वि.रचण्यास योग्य.
**प्रपात** पुं. कडा.
**बन्ध** पुं. बंधन.
**बलप्रद** वि. शक्तिदायक.
**भक्ष्** १० प. खाणें.
**भिक्षुक** पुं. याचक; भिकारी.
**भुजंग** पुं. साप.
**भेषज** न. औषध.
**मधु** न. मध.

**मधुसूदन** पुं. कृष्ण.
**मुण्ड** न. डोकें.
**मुण्डित** वि. मुण्डन केलेलें.
**मूषक** पुं. उंदीर.
**यत्रकुत्र** अ. कोठें तरी, वाटेल तेथें.
**यव** पुं. सातु.
**युज्** ( वि ) ७ उ. वेगळें करणें.
**लक्षण** न. व्याख्या.
**लघु** वि. हलकें; लहान.
**लंब्** ( आ ) १ आ. आश्रय करणें, धरणें.
**वारि** न. पाणी.
**विचित्र** वि. विलक्षण.
**विद्** ( विन्द् ) ६ आ. मिळाविणें.
**विरह** पुं. वियोग.
**वृ** (नि) १० प. निवारणें.
**वृत्त** न. (चांगलें) वर्तन.
**वृश्चिक** पुं. विंचू.
**शकुनि** पुं. कौरवांचा मामा.
**शालि** स्त्री. साळ, भात.
**शेष** पुं. शिल्लक.
**श्री** ( अधि ) ९ उ. शिजविणें, उकडणें.
**श्रोत्र** न. कान.
**संमर्द** पुं. गर्दी.
**सह्** १ आ. प्रयो. सहन करविणें.
**सुखम्** अ. सुखानें.
**स्थाली** स्त्री. तपेली.
**स्निग्ध** वि. प्रेमळ.
**हृ** ( अप ) १ उ. ओढून नेणें.

## चतुर्दशः पाठः

पूर्वतयारीः—अदस्, इन् अन्ताचे शब्द—इन् प्रत्ययान्त ना. सा. व धा. सा.; तुम् प्रत्ययान्त धा. सा. अ. §§ ७३, ८६, ११३ (२, ३) २८६, २८०.

तेजस्वी क्षमते सर्वं भोक्तुं वह्निरिवानघः ।
हिंसारतश्च यो नित्यं नेहासौ सुखमेधते ।
एकस्य नापराधेन लोकांस्त्वं हन्तुमर्हसि ।
मन्दोऽप्यविरतोद्योगः सदैव विजयी भवेत् ।

अतिस्नेहः पापशंकी । विक्रीते करिणि किमङ्कुशे विवादः ? दीर्घसूत्री विनश्यति । शीर्षे सर्पो देशान्तरे वैद्यः । दुष्करं विषमौषधीकर्तुम् । यद्भावि तद्भवतु । सर्वज्ञस्याप्येकाकिनो निर्णयाभ्युपगमो दोषाय । भिन्नरुचिर्हि लोकः । अमुष्य विद्या रसनाग्रनर्तकी । अमीषां प्राणानां कृते दुष्करमप्यनुतिष्ठति मानवः ।

जीवो जीवस्य जीवनम् । स्वके गेहे कुक्कुरोऽपि तावच्चण्डो भवति । अस्या नद्याः पूरेणातीते वर्षे गृहाण्यौह्यन्त बहूनि । स्वयं रोपितेषु तरुषूत्पद्यते स्नेहः, किं पुनरङ्गसंभवेष्वपत्येषु ? स्निग्ध-जनसंविभक्तं हि दुःखं सह्यवेदनं भवति । न त्वामेकाकिनं परित्यक्तुमुत्सहे ।

नैवास्ति लिखितादन्यत् स्मारकं व्यवहारिणाम् ।
सर्वे यत्र विनेतारः सर्वे पण्डितमानिनः ।
सर्वे महत्त्वमिच्छन्ति कुलं तदवसीदति ॥
चराणामन्नमचरा दंष्ट्रिणामप्यदंष्ट्रिणः ।
अहस्ताश्च सहस्तानां शूराणां चैव भीरवः ।
अज्ञेभ्यो ग्रन्थिनः श्रेष्ठा ग्रन्थिभ्यो धारिणो वराः ।
धारिभ्यो ज्ञानिनः श्रेष्ठा ज्ञानिभ्यो व्यवसायिनः ॥
कोऽतिभारः समर्थानां किं दूरं व्यवसायिनाम् ॥
को विदेशः सुविद्यानां कः परः प्रियवादिनाम् ।
न संशयमनारुह्य नरो भद्राणि पश्यति ॥
संशयं पुनरारुह्य यदि जीवति पश्यति ॥
सुखार्थी वा त्यजेद्विद्यां विद्यार्थी वा त्यजेत् सुखम् ।
सुखार्थिनः कुतो विद्या कुतो विद्यार्थिनः सुखम् ॥
तृणादपि लघुस्तूलस्तूलादपि च याचकः ।
वायुना किं न नीतोऽसौ ? मामयं प्रार्थयेदिति ॥
विषादप्यमृतं ग्राह्यं बालादपि सुभाषितम् ।
अमित्रादपि सद्वृत्तममेध्यादपि कांचनम् ॥

## शब्दार्थसंग्रह

अग्र न. टोंक. अचर वि. स्थावर. अदस् स. हा; तो. अनघ वि. निर्दोष, शुद्ध. अनारुह्य अ. चढल्या-शिवाय.

---

१. § ३१७ (४). २. लघु=लघुतरः ३. परस्मैपद अनियमित.

**अभ्युपगम** पुं. मान्य करणें.
**अमित्र** पुं. शत्रु.
**अर्थ् (प्र)** १० आ. मागणें.
**अविरत** वि. संतत.
**अहस्त** वि. हात नसणारा.
**एकाकिन्** वि. एकटा.
**एध्** १ आ. वाढ-उत्कर्ष पावणें.
**करिन्** पुं. हत्ती.
**कांचन** न. सोनें.
**किं पुनर्** अ. कितीतरी.
**कुक्कुर** पुं. कुत्रा.
**क्षम्** १ आ. समर्थ होणें.
**ग्रन्थिन्** पुं. ग्रंथ पढणारा.
**ग्राह्य** वि. घेण्यास योग्य.
**चण्ड** वि. भयंकर.
**चर** वि. सजीव, जंगम.
**जीव** न. प्राणी.
**जीवन** न. निर्वाहाचें साधन.
**ज्ञानिन्** वि. अर्थ जाणणारा, ज्ञानवान्.
**तावत्** अ. खरोखर.
**तूल** पुं. कापूस.
**दंष्ट्रिन्** वि. सुळे असणारा प्राणी.
**दीर्घसूत्रिन्** वि. चेंगट, विलंब करणारा.
**दुष्कर** वि. करण्यास कठीण.
**देशान्तर** न. दुसरा देश.
**दोष** पुं. अहित, नुकसान.
**धारिन्** वि. ध्यानांत ठेवणारा.
**नर्तक** वि. नाचणारा.
**निर्णय** पुं. निकाल.
**पण्डितमानिन्** वि. स्वतःस शहाणा मानणारा.
**पर** पुं. शत्रु.
**पाप** न. अनिष्ट, अशुभ.
**प्रियवादिन्** वि. गोड-बोल्या.
**भाविन्** वि. होणारें.
**भीरु** वि. भित्रा.
**भुज्** ७ आ. उपभोग घेणें.
**याचक** पुं. भिकारी.
**रत** वि. आसक्त.
**रसना** स्त्री. जीभ.
**रोपित** वि. लावलेलें.
**लिखित** न. लेख.
**वर** वि. श्रेष्ठ.
**वा** अ. किंवा.
**विक्रीत** वि. विकलेलें.
**विजयिन्** वि. यशस्वी.
**विदेश** पुं. परका देश.
**विद्यार्थिन्** वि. विद्या इच्छिणारा.
**विनेतृ** पुं. नायक, पुढारी.
**विवाद** पुं. भांडण, वाद.
**व्यवसायिन्** वि. उद्योगी, कार्य करणारा.
**व्यवहारिन्** वि. व्यापार-धंदा करणारा.
**शीर्ष** न. डोकें.
**सद् (अव)** १ प. ऱ्हास-नाश पावणें, बुडणें.
**सद्वर्तन** न. चांगलें वर्तन.
**संभव** पुं. उत्पत्ति.
**संविभक्त** वि. विभागलेलें.
**संशय** पुं. धोका.
**सह् (उद्)** १ आ. धाडस धीर करणें.
**सहस्त** वि. हात असणारा.
**सह्य** वि. सोसण्याजोगें.
**सुखार्थिन्** वि. सुख इच्छिणारा.
**सुविद्य** वि. विद्वान्.
**स्था (अनु)** १ प. कर०.
**स्वक** वि. आपलें.
**स्वयम्** अ. स्वतः.
**हन्** २ प. नाश करणें.

## पञ्चदशः पाठः

**पूर्व तयारीः**— अत्, मत्, वत्, तवत्–प्रत्ययान्त शब्द. §§ ७४. ७५, ११३, २७४, २७६.

सर्वं बलवतः पथ्यम् । गगनतले प्रतिवसन्तौ चन्द्रसूर्यावपि विपत्तिं लभेते, किं पुनर्मनुष्याः । जीवन्नरो भद्रशतानि पश्येत् । यः सदाचारवान्नरः स शतं वर्षाणि जीवति । अहो विघ्नवत्यः प्रार्थितार्थसिद्धयः! सागरं वर्जयित्वा कुत्र वा महानदी अवतरति ? अनुभूयमाने किं संशयेन ? पत्तने विद्यमानेऽपि ग्रामे रत्नपरीक्षा ! मातः, अभिवादये त्वाम् । वत्स, आयुष्मान् भव । वृश्चिकभिया पलायमान आशीविषमुखे पतितः । यः क्रियावान् स पण्डितः । यैर्यत्र दृश्यते भास्वान्स तेषामुदयः स्मृतः । न कश्चिद्धीमतामविषयो नाम । तस्मिन् न कमपि दोषं दृष्टवानस्मि, कथं भवान्मन्यते ? महत्खलु कृच्छ्रं प्राप्तवत्यासि, अहं तावत्तवापदुद्धरणे परं यत्नमातिष्ठामि । स्थितं पूर्वं जलं यत्र पुनस्तत्रैव गच्छति ।

वनानि दहतो वह्नेः सखा[1] भवति मारुतः[2] ।
स एव दीपनाशाय[3] कृशे कस्यास्ति सौहृदम् ॥
यस्मिञ्जीवति[4] जीवन्ति बहवः, सोऽत्र जीवति ।
वायसाः किं न कुर्वन्ति चञ्च्वा स्वोदरपूरणम् ॥
योजनानां सहस्रं तु शनैर्गच्छेत्पिपीलिका ।
अगच्छन्वैनतेयोऽपि पदमेकं न गच्छति ॥
यथा खनन् खनित्रेण नरो वार्यधिगच्छति ।
तथा गुरुगतां विद्यां शुश्रूषुरधिगच्छति ।
बुद्धिमानभ्यसेन्नित्यं बहुशास्त्राण्यतन्द्रितः ।
तदर्थं तु गृहीत्वा हि तदधीनो न जायते ॥ मनु

---

१. § ९९. २. § ४९ (१). ३. § ३१६ (३). ४. § ३१९ (५). ५. § ११८..

प्रारभ्यते न खलु विघ्नभयेन नीचैः प्रारभ्य विघ्नविहता विरमन्ति मध्याः । विघ्नैः पुनःपुनरपि प्रतिहन्यमानाः प्रारब्धमुत्तमजना न परित्यजन्ति ॥ नरपतिहितकर्ता द्वेष्यतां याति लोके जनपदहितकर्ता त्यज्यते पार्थिवेन । इति महति विरोधे वर्तमाने समाने नृपतिजनपदानां दुर्लभः कार्यकर्ता ॥

## शब्दार्थसंग्रह

**अतंद्रित** वि. निरलस.
**अधीन** वि. पराधीन.
**अय्** (परा–पला) १ आ. पळणें.
**अर्थ** पुं. अभिप्राय.
**आयुष्मत्** वि. दीर्घायुषी.
**आशी** स्त्री. सर्पदंष्ट्रा.
**आशीविष** पुं. साप.
**उदय** पुं. उगवण्याचें स्थान.
**उदर** न. पोट.
**उद्धरण** न. सुटका करणें.
**कृच्छ्र** न. संकट.
**कृश** वि. क्षीण, दुर्बल.
**क्रियावत्** वि. उद्योग करणारा.
**खन्** १ उ. खणणें.
**खनित्र** न. कुदळ.
**गुरुगत** वि. गुरूजवळ असलेलें.
**जनपद** पुं. देश; राष्ट्र.
**तल** न. पृष्ठभाग; तळ.
**तॄ** (अव) १ प. उतरणें; कडे जाणें.
**द्वेष्यता** स्त्री. शत्रुत्व.
**धीमत्** वि. बुद्धिवान.
**नीच** वि. खालच्या प्रतीचा (मनुष्य).
**पत्तन** न. शहर.
**पद** न. पाऊल.
**पर** वि. मोठा, अतिशय.
**पिपीलिका** स्त्री. मुंगी.
**पूरण** न. भरणें.
**पूर्वम्** अ. पहिल्यानें.
**प्राप्तवत्** वि. पोंचलेला.
**प्रारब्ध** वि आरंभलेलें.
**प्रारभ्य** अ. आरंभून.
**प्रार्थित** वि. मागितलेलें, इच्छिलेलें.
**बलवत्** वि. बळवान.
**बुद्धिमत्** वि. बुद्धिवान.
**भवत्** स. आपण; तुम्ही.
**भास्वत्** पुं. सूर्य.
**भी** स्त्री. भीति.
**मध्य** वि. मध्यम प्रतीचा (मनुष्य.)
**महत्** वि. मोठें.
**मारुत** पुं. वारा.
**योजन** न. चार कोस.
**रम्** (वि) १ प. थांबणें.
**वद्** (अभि) १ प. प्रयो-आ. नमस्कार करणें.
**वर्जयित्वा** अ. सोडून.
**वा** अ. वरें.
**वायस** पुं. कावळा.
**विघ्नवत्** वि. विघ्नांनीं भरलेलें.
**विहत** वि. हाणून पाडलेलें, जेरीस आणलेलें.
**वैनतेय** पुं. गरुड.
**शनैस्** अ. हळुहळु.
**शुश्रूषु** वि. सेवा करणारा.
**सखि** पुं. मित्र.

सहस्र न. हजार.
सौहृद न. मैत्री.
स्मृत वि. सांगितलेलें.
हन् ( प्रति ) २प. हट- विणें, प्रतिबंध करणें.

## षोडशः पाठः

**पूर्वतयारीः**—स्-कारान्त व ईयस् प्रत्ययान्त शब्द; ईयस् व इष्ठ, तर व तम प्रत्ययान्त ना. सा. §§ ७२, ७६, ११४, ३१७ (४).

बधिरान्मन्दकर्णः श्रेयान् । मतिरेव बलाद्गरीयसी । धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत् क्षत्रियस्य न विद्यते । वचस्तत्र प्रयोक्तव्यं यत्रोक्तं लभते फलम् । ईश्वरेच्छा बलीयसी । कनीयानेष मे भ्राता, ज्येष्ठोऽहं सर्वभ्रातृषु । रन्ध्रोपनिपातिनोऽनर्था इति यदुच्यते तद-व्यभिचारि वचः । तृणेन कार्यं भवतीश्वराणाम् ।

विनाश्रयं न तिष्ठन्ति पंडिता वनिता लताः ।
क्वचिद् रुष्टाः क्वचित् तुष्टास्तुष्टा रुष्टाः क्षणे क्षणे ।
अव्यवस्थितचित्तानां प्रसादोऽपि भयंकरः ॥
मनसा चिन्तितं कार्यं वचसा न प्रकाशयेत् ।
अन्यलक्षितकार्यस्य यतः सिद्धिर्न जायते ॥
शशिना च निशा, निशया च शशी, शशिना निशया च विभाति नभः
पयसा कमलं, कमलेन पयः, पयसा कमलेन विभाति सरः ॥
स्वजनैर्न विरुध्येत न स्पर्धेत बलीयसा ।
न कुर्याद् बालवृद्धस्त्रीमूर्खैर्श्च च विवादनम् ॥
दधि मधुरं, मधु मधुरं, द्राक्षा मधुरा, सुधापि मधुरैव ।
तस्य तदेव हि मधुरं यस्य मनो यत्र संलग्नम् ॥
पिण्डे पिण्डे मतिर्भिन्ना, कुण्डे कुण्डे नवं पयः ।
जातौ जातौ नवाचाराः, भिन्ना वाणी मुखे मुखे ॥
गुणवज्जनसंसर्गाद्याति नीचोऽपि गौरवम् ।

पुष्पमालानुषंगेण सूत्रं शिरसि धार्यते ॥
यो न संचरते देशान् यो न सेवेत पण्डितान् ।
तस्य संकुचिता बुद्धिर्घृतबिन्दुरिवाम्भसि ॥
यस्तु संचरते देशान् यस्तु सेवेत पण्डितान् ।
तस्य विस्तारिताबुद्धिस्तैलबिन्दुरिवाम्भसि ॥
दुराचारो हि पुरुषो लोके भवति निन्दितः ।
दुःखभागी च सततं व्याधितोऽल्पायुरेव च ॥
निजदोषावृतमनसामतिसुंदरमेव भाति विपरीतम् ।
पश्यति पित्तोपहतः शशिशुभ्रं शंखमपि पीतम् ॥
कान् पृच्छामः? सुराः स्वर्गे, निवसामो वयं भुवि
किं वा काव्यरसः स्वादुः किं वा स्वादीयसी सुधा? ॥
कुटुंबमपि मे प्रेयः प्रेयांस्त्वमपि हे सखे ।
किं करोमि द्विधाचित्तः इतो व्याघ्र इतस्तटी ॥

तस्य वा एतस्याग्न्याधेयस्य सत्यमेवोपचारः । स यः सत्यं वदति यथाग्निं समिद्धं तं घृतेनाभिषिंचेदेवं हैनं स उद्दीपयति तस्य भूयो भूय एव तेजो भवति, श्वः श्वः श्रेयान् भवति । अथ योऽनृतं वदति यथाग्निं समिद्धं तमुदकेनाभिषिंचेदेवं हैनं स जासयति तस्य कनीयः कनीय एव तेजो भवति, श्वः श्वः पापीयान्भवति । तस्माद् सत्यमेव वदेत् । श. ब्रा. २-२-२.

## शब्दार्थसंग्रह

अग्न्याधेय न. [ अग्नि+ आधेय] अग्निहोत्र ठेवणें.
अथ अ. पण, उलटपक्षीं.
अनर्थ पुं. संकट.
अनुषंग पुं. निकट संबंध.
अंभस् न. पाणी.
अव्यभिचारिन् वि. अपवादरहित.
अव्यवस्थित वि. चंचल,

---

३. § १२१. ४. § ३३२ (अनुक्रम).

अस्थिर.
आयुस् न. आयुष्य.
आवृत वि. झांकलेलें.
आश्रय पुं. आधार.
उ अ. आणि, च.
उपचार पुं कर्तव्य. वर्तननियम.
उपनिपातिन् वि. एकाएकीं येणारा-घडणारा.
उपहत वि. पीडित, ग्रस्त.
कनीयस् वि. धाकटा, कमी
कार्य न. काम; उपयोग.
कुण्ड न. तळें, पुष्करिणी.
गरीयस् वि. श्रेष्ठ.
गौरव न. मोठेपणा.
घृत न. तूप.
चर् ( सम् ) १ प. हिंडणें.
जस् ४ प. प्रयो. नाश करणें; विझवणें.
तेजस् न. तेज.
दधि न. दहीं.
दीप् (उद्) ४आ. प्रयो. प्रज्वलित करणें.
दुःखभागिन् वि. दुःखी.
द्राक्षा स्त्री. द्राक्ष.
धर्म्य वि. धर्मास सोडून नसलेलें.
धृ १० प. धारण करणें.
नभस् न. आकाश.
निंदित वि. निंदिलेलें.
पयस् न. पाणी; दूध.
पापीयस् वि. अधिक. पापी.
पिण्ड पुं., न. देह.
प्रयोक्तव्य वि. उपयोग करण्यास योग्य.
प्रसाद पुं. कृपा, अनुग्रह.
बधिर वि. बहिरा.
बलीयस् वि अधिक बळवान.
भयंकर वि. भीतिदायक.
भा (वि) २ प. शोभणें.
भूयस् वि. जास्त.
मनस् न. मन.
मन्द वि. कमजोर.
रन्ध्र न. भोंक, छिद्र, व्यंग.
रुध् ( वि ) ४ आ. विरोध करणें.
वचस् न. भाषण.
विवाद न वाद.
विस्तारित वि. विस्तृत. व्यापक.
वै अ. खरोखर.
व्याधित वि. रोगग्रस्त.
शशिन् पुं. चंद्र.
शिरस् न. डोकें.
शुभ्र वि. पांढरें.
श्रेयस् वि. चांगलें.
संकुचित वि. आकुंचित.
समिद्ध वि. पेटलेलें.
सरस् न. तळें.
संलग्न वि. जडलेलें.
संसर्ग पुं. सहवास.
सिच् ( अभि )—अभिषिंच् ओतणें.
सुधा स्त्री. अमृत.
स्पर्ध् १ आ.. चढाओढ करणें.
ह अ. खरोखर.

## सप्तदशः पाठः

पूर्वतयारीः—५ वा व ८ वा गण-गणसापेक्ष काळ व अर्थ. §§ २३८ १३९, १६४, १६६.

अत्युत्कटैः पापपुण्यैरिहैव फलमश्नुते । इदं ते लोभान्धस्य वृत्तं मनसि मे चमत्कारमातनोति । शीतोऽयं मारुतः पीडयति मामति-

मात्वं; क्षिप्रमावृणुष्व द्वारं तथा वातायनमपि। आकृतिविशेषेष्वा-दरः पदं करोति। संलापं नैव शृणुयाद् गुप्तः कस्यापि सर्वदा। न लेखेन विना कुर्याद् व्यवहारं सदा बुधः। संमानाद् ब्राह्मणो नित्य-मुद्विजेत विषादिव। स्रजमपि शिरस्यन्धः क्षिप्तां धुनोत्यहिशंकया। पाठशालायाः प्रतिनिवर्तमानोऽहं मार्गे महान्तं कोलाहलमशृण-वम्; तस्य निमित्तं पृष्टा मया नाशक्नुवन् कथयितुं जनाः। अद्भुताः कथाः सतृष्णं शृण्वन्ति बालाः। किं ते प्रियं करवाणि ?. पुत्रो मे यशः प्राप्नोतु। मातः, प्रहिणु कंचन भृत्यं स्वसारमानेतुम्। स-न्मित्रं गुह्यं गूहति,न कदापि विवृणोति। किं वृथा दुनोषि परुष-वचनैः जनस्य चित्तम्। भूयः कथय, तृप्तिर्हि शृण्वतो नास्ति मेऽमृतम्।

धर्मं शनैः संचिनुयाद्वल्मीकमिव पुत्तिकाः।
परलोकसहायार्थं सर्वभूतान्यपीडयन्॥
कुलीनैः सह संपर्कं सज्जनैः सह मित्रताम्।
ज्ञातिभिश्च समं मेलं कुर्वाणो न विनश्यति॥
नैव यज्ञैर्न वा दानैर्न गुरोरुपसेवनात्।
प्राप्नुवन्ति तथा धर्मं यथा कार्यानुपालनात्॥
छिन्नोऽपि रोहति तरुः क्षीणोऽप्युपचीयते* पुनश्चन्द्रः।
इति विमृशन्त सन्तः संतप्यन्ते न विप्लुता लोके॥
अकिंचिदपि कुर्वाणः सौख्यैर्दुःखान्यपोहति।
तत्तस्य किमपि द्रव्यं यो हि यस्य प्रियो जनः॥
कुर्वन्नपि व्यलीकानि यः प्रियः प्रिय एव सः।
अनेकदोषदुष्टोऽपि कायः कस्य न वल्लभः॥

---

१. § ३३८ (ऊ). २. § ६८. १. § ३१५ (७). २. § ३१८ (२).

गुणैर्गौरवमायाति नोच्चैरासनमास्थितः ।
प्रासादशिखरारूढः काको न गरुडायते ॥
वनस्पतेरपक्कानि फलानि प्रचिनोति यः ।
स नाप्नोति रसं तेभ्यो बीजं चास्य विनश्यति ॥

## शब्दार्थसंग्रह

अतिमात्रम् अ. अतिशय
अत्युत्कट वि. अत्यंत मोठें.
अनुपालन न. पाळणें.
अयन न. मार्ग, द्वार.
अश् ५ आ. भोगणें.
अहि पुं. साप.
आकृति स्त्री. स्वरूप.
आप् ५ प. मिळविणें.
,, प्र + ,, .
आरूढ वि. चढलेला.
आस्थित वि. ( ज्यानें आश्रय केला आहे असा ) बसलेला.
उच्चैस् अ. उंच.
उपसेवन न. सेवा.
ऊह् ( अप ) १ उ. दूर नाहींसें करणें.
काय पुं. शरीर.
कार्य न. कर्तव्य.
क्षिप्र अ. लवकर.
क्षीण वि. रोडका.
गरुडाय ना. धा. गरुडा-प्रमाणें होणें.
गुप्त वि. लपलेला.
गुह् ( गुह् ) १ उ. गुप्त ठेवणें.
चि ५ उ. गोळा करणें.
,, उप+वाढवणें.
,, प्र+गोळा करणें; तोडणें.
,, सम् + संचय करणें.
छिन्न वि. तोडलेलें.
ज्ञाति स्त्री. नातलग.
तथा अ. आणि, तसेंच.
तन् ८ उ. ताणणें, पसरणें.
,, आ + उत्पन्न करणें.
तप् ( सम् ) ४ आ. दुःख पावणें.
दु ५ प. दुःख देणें.
दुष्ट वि. दूषित, सदोष.
धर्म पुं. पुण्य.
धु ५ प. हलविणें; फेंकून देणें.
पदं कृ आंत पाऊल ठेवणें.
परुष वि. कठोर अप्रिय.
पुत्तिका स्त्री. वाळवी.
बुध पुं. शहाणा.
भूयस् अ. पुनः
मृश् (वि) ६ प. विचार करणें.
मेल पुं ऐक्य, गट्टी.
या ( आ ) २ प. येणें.
लेख पुं. लेख, दस्तऐवज.
वनस्पति पुं. वृक्ष.
वल्मीक पुं. न. वारूळ.
वल्लभ वि. प्रिय.
वातायन न. ( ष. त. ) खिडकी.
विज् ( उद् ) ६ आ. तिटकारा करणें; वीट मानणें.
विप्लुत वि. संकटग्रस्त.

---

३. अवर्णनीय. ४ § २५८. *§ ३०४.

| | | |
|---|---|---|
| वृ ५ उ. आच्छादणें. | समम् अ बरोबर. | सौख्य न. सुख. |
| ,, आ + झांकणें. | सत् वि. चांगलें. | स्रज् स्त्री. माळ. |
| ,, वि + प्रकट करणें. | संपर्क पुं. सहवास. | व्यवहार पुं. व्यापारधंदा कारभार. |
| व्यलीक न अप्रिय गोष्ट. | संमान पुं. मान, सत्कार. | |
| श्रु ( शृ ) ५ प. ऐकणें. | संलाप पुं. संभाषण. | हि ५ प. पाठविणें- |
| | | ,, प्र + ,, |

## अष्टादशः पाठः

पूर्वतयारीः—अन्, मन्, वन् अन्ताचे शब्द; संख्यावाचक शब्द; इमन् प्रत्ययान्त ना. सा. §§ ७८, ९०, ९३, ११२ ( ३ ).

किं नामैतद्यदंवुनि मज्जन्त्यलावूनि ग्रावाणः प्लवन्ते इति ! गहना कर्मणो गतिः । संशयात्मा विनश्यति । आत्मनः प्रतिकूलानि न परेषां समाचरेत् । यथा वृक्षस्य संपुष्पितस्य दूराद्गन्धो वाति, एवं पुण्यस्य कर्मणो दूराद् गन्धो वाति । एतावानस्य महिमा, अतो ज्यायांश्च पूरुषः । जन्मप्रभृति[1] राजपुत्रान् रक्षेत्; कर्कटकसधर्माणो हि जनकभक्षा राजपुत्राः । यद्वेतसः कुब्जलीलां विडंबयति तत्किमात्मानः प्रभावेण, ननु नदीवेगस्तत्र कारणम् ? देवा दिशन्तु नः सिद्धिं ब्रह्मेशानजनार्दनाः । यथा लीनः सर्पो यस्माद्भयं पश्यति तत्र विषमुत्सृजति, तथैवायं राजा जातदोषाशंकस्त्वयि पुरा क्रोधविषमुत्सृजत्यन्यत्र गम्यतामिति भीतवर्गमुपजापयेत् । उभौ चेमा लक्ष्मसुतौ साध्वसेनान्योन्यमात्मानं न विवृण्वाते । द्वादश वै मासाः संवत्सरः । षट्पञ्चाशता रूपकैः क्रीतोऽयमश्वो मया । द्वादश्यां तिथौ द्वादशभ्यो ब्रह्मचारिभ्यो संपन्नं भोजनमयच्छन्मम माता । नवानां रात्रीणां समाहारो नवरात्रम् ।

---

१. जन्मनः प्रभृति पं. त. १. §३४४. २. § ३४६.. ३. § ३२०

नात्मानमवमन्येत पूर्वाभिरसमृद्धिभिः ।
आ मृत्योः श्रियमन्विच्छेन्नैनां मन्येत दुर्लभाम् ॥
खादन्न गच्छेदध्वानं न च हास्येन भाषणम् ।
शोकं न कुर्यान्नष्टस्य स्वकृतेरपि जल्पनम् ॥
विहाय पौरुषं यो हि दैवमेवावलम्बते ।
प्रासादसिंहवत्तस्य मूर्ध्नि तिष्ठन्ति वायसाः ॥
बलवानपि निस्तेजाः कस्य नाभिभवास्पदम् ।
निःशंकं दीयते लोकैः पश्य भस्मचये पदम् ॥
उत्तमा आत्मना ख्याताः पितुः ख्याताश्च मध्यमाः ।
अधमा मातुलात् ख्याताः श्वशुराच्चाधमाधमाः ॥
उद्यच्छेदेव न नमेदुद्यमो ह्येव पौरुषम् ।
अप्यपर्वणि भज्येत न नमेदिह कर्हिचित् ॥
धर्मार्थकाममोक्षाणां यस्यैकोऽपि न विद्यते ।
अजागलस्तनस्येव तस्य जन्म निरर्थकम् ॥
ज्वलति चलितेन्धनोऽग्निर्विप्रकृतः पन्नगः फणां कुरुते ।
प्रायः स्वं महिमानं क्रोधात् प्रतिपद्यते जन्तुः ॥
वित्तं बन्धुर्वयः कर्म विद्या भवति पंचमी ।
एतानि मान्यस्थानानि गरीयो यद्यदुत्तरम् ॥
शुनः पृच्छमिव व्यर्थं जीवितं विद्यया विना ।
न गुह्यगोपने शक्तं न च दंशनिवारणे ॥
खलः सर्षपमात्राणि परच्छिद्राणि पश्यति ।
आत्मनो बिल्वमात्राणि पश्यन्नपि न पश्यति ॥

## शब्दार्थसंग्रह

| | | |
|---|---|---|
| अजा स्त्री. शेळी. | अन्यत्र अ. दुसरीकडे. | अपमान. |
| अधम वि. कनिष्ठ. | अन्योन्यम् अ. परस्परांस | अंबु न. पाणी. |
| अध्वन् पुं. मार्ग. | अभिनव पुं. तिरस्कार, | अलाबु न. भोपळा. |

४. § ३३७ (६), सिंह--मातीचा, दगडाचा इ.

आत्मन् पुं. आत्मा; आपण.
आशंका स्त्री. संशय.
आस्पद न. स्थान, विषय.
इन्धन न. सर्पण.
ईशान पुं. शंकर
उत्तर वि. नंतरचें, मागचें
उभ स. दोघे.
एतावत् वि. एवढें.
कर्कटक पुं. खेकडा.
कर्मन् न. काम.
कुब्ज वि. कुबडा.
ख्यात वि. प्रसिद्ध.
गति स्त्री. तत्त्व.
गल पुं. गळा.
गहन वि. कठीण, दुर्बोध
ग्रावन् पुं. दगड.
चलित वि. हलवलेला.
चर् (समा) १ प. करणें.
चय पु. ढीग.
जनार्दन पुं. विष्णु.
जन्तु पुं. प्राणी.
जप् (उप) १ प. प्रयो. कान फुंकणें, चिथवणें.
जल्पन न. बडबड.
ज्यायस् वि. श्रेष्ठ, वडील.
ज्वल् १ प. पेटणें.
डंब (वि) १० प. नक्कल अनुकरण करणें.
तपस् न. तप.
दिश् ६ उ. देणें.
दोष पु. गुन्हा.
ननु अ. [न+नु] प्रश्नार्थी.
निःशंकम् अ. निर्भयपणें
निःस्तेजस् वि. मेषपात्र.
पद् (प्रति) ४ आ. स्वीकारणें.
पन्नग पुं. साप.
पर्वन् न. पेर.
पुण्य वि. पवित्र.
पुरा अ. खात्रीनें.
पूरुष पुं. परमात्मा.
प्लु १ आ. तरंगणें.
पौरुष न. पराक्रम.
प्रतिकूल न. प्रतिकूल गोष्ट—कृत्य.
प्रभृति अ. पासून.
प्रभाव पुं. सामर्थ्य.
प्रायेण अ. बहुतकरून.
फणा स्त्री. फडा.
बन्धु पुं. नातलग.
बिल्व न. बेलफळ.
ब्रह्मन् पुं. ब्रह्मदेव.
भञ्ज् ७ उ. मोडणें.
भस्मन् न. राख.
भीत वि. भिला.
महिमन् पुं. मोठेपणा.
मातुल पुं. मामा.
मात्रा स्त्री. प्रमाण.
मूर्धन् पुं. डोकें.
यम् (उद्) १ प. वर करणें-होणें, ताठ राहणें.
राजन् पुं. राजा.
लंब् (अव) १ आ. आश्रय करणें.
लीन वि. लपून बसलेला
लीला स्त्री. हालचाल, क्रिया.
विप्रकृत वि. अपमान केलेला, दुखविलेला.
विहाय अ. टाकून.
वेतस पुं. वेत.
श्वशुर पुं. सासरा.
सधर्मन् वि. सारख्या गुणाचा.
संपुष्पित वि. चांगला फुललेला.
सर्षप पुं. मोहरी, राई.
संशयात्मन् वि. (संशयः आत्मा यस्य ) संशयी
साध्वस न. भीति.
सृज् (उद्) ६ प. टाकणें.
हास्य न. हसें.

# एकोनविंशः पाठः

**पूर्वतयारीः**—९ वा गणसापेक्ष काळ व अर्थ; च्, छ्, ज्, श्-कारान्त शब्द, §§ १६८, ६८.

नहि सर्वः सर्वं जानाति। सत्योऽयं जनप्रवादो यद्विपद् विपदं संपत् संपदमनुबध्नाति। किमार्द्रकवणिजो वहित्रचिन्तया? नाकस्माच्छांडिली-माता विक्रीणाति तिलैस्तिलान्। आत्मनो मुखदोषेण बध्यन्ते शुकसारिकाः। नहि खड्गो विजानाति कर्मकारं स्वकारणम्। अहिरेव अहेः पादान् विजानाति न संशयः। सन्तापयन्ति कथमपथ्यभुजं न रोगाः। ह्योऽस्मद्गृहे स्तेनं धनं मुष्णन्तं वयमगृह्णीम रज्ज्वा च तमबध्नीम। अकन्दसमुत्थिता पद्मिनी, अवञ्चको वणिक्, अचौरः सुवर्णकारः, अकलहो ग्रामसमागमः इति दुष्करमेते संभाव्यन्ते। विपुलानि नानाविधानि सन्त्यस्मिन्नुपवने कुसुमानि; यानि यावन्ति चेच्छति भवांस्तानि तावन्ति च गृह्णातु, न कोऽपि भवन्तं प्रतिबध्नीयात्। कियान् खलु कालो व्यतीतो ममेहागतस्य, तदधुनानुजानीहि मां गमनाय, जननी मे प्रतीक्षमाणा भवेत। आपः पुनन्तु पृथिवीं, पृथिवी पूता पुनातु माम्।

गच्छ शूकर भद्रं ते वद सिंहो मया हतः।
पण्डिता एव जानन्ति सिंहशूकरयोर्बलम्॥
यथा नयत्यसृक्पातैर्मृगस्य मृगयुः पदं।
नयेत्तथानुमानेन धर्मस्य नृपतिः पदम्॥

प्रीणाति यः सुचरितैः पितरं स पुत्रो यद्भर्तुरेवं हितमिच्छति तत्कलत्रम्। तन्मित्रमापदि सुखे च समक्रियं यदेतत्त्रयं जगति पुण्यकृतो लभन्ते॥

विरला जानन्ति गुणान् विरलाः कुर्वन्ति निर्धने स्नेहम्।
विरलाः परकार्यरताः परदुःखेनापि दुःखिता विरलाः॥

---

१. मधुरवाणीरूपी दोष. २. 'एव' चा 'जानन्ति' शीं अन्वय. ३. 'एवं' चा 'हित'शीं अन्वय ४. § १२१.

लुब्धमर्थेन गृह्णीयात् क्रुद्धमंजलिकर्मणा ।
मूर्खं छन्दानुरोधेन तत्त्वार्थेन च पण्डितम् ॥
दृष्टिपूतं न्यसेत्पादं वस्त्रपूतं पिबेज्जलम् ।
सत्यपूतां वदेद्वाचं मनःपूतं समाचरेत् ॥
छायार्थं ग्रीष्मसंतप्तो यामेवाहं समाश्रितः ।
अजानता मया सैव पत्रैः शाखा वियोजिता ।
यो जानात्यर्जितुं सम्यगर्जितं न तु रक्षितुम् ।
नातः परतरो मूर्खो वृथा तस्यार्जनश्रमः ॥
आरभन्तेऽल्पमेवाज्ञाः कामं व्यग्रा भवन्ति च ।
महारंभाः कृतधियस्तिष्ठन्ति च निराकुलाः ॥
रविरपि न दहति तादृग्यादृक् संदहति वालुकानिकरः ।
अन्यस्माल्लब्धपदो नीचः प्रायेण दुःसहो भवति ।
एकस्य कर्म संवीक्ष्य करोत्यन्योऽपि गर्हितम् ।
गतानुगतिको लोको न लोकः पारमार्थिकः ॥
कृपणेन समो दाता भुवि कोऽपि न विद्यते ।
अनश्नन्नेव वित्तानि यः परेभ्यः प्रयच्छति ॥

## शब्दार्थसंग्रह

**अकस्मात्** अ. कारणावांचून.
**अञ्जलिकर्मन्** न. हात जोडणें.
**अनुरोध** पुं. अनुसरणें, मर्जी सांभाळणें.
**अप्** स्त्री. (नि.व.)पाणी.
**अपथ्यभुज्** वि. कुपथ्य करणारा.
**अर्ज्** १ मिळविणें.
**अर्जन** न. मिळविणें.
**अश्** ९ प. खाणें.
**असृज्** न. रक्त.
**आरंभ** पुं. कार्य.
**आर्द्रक** न. आलें.
**उपवन** न. बाग.
**कन्द** पुं कांदा.
**कर्मकार** पुं. शिल्पकार.
**कलत्र** न. बायको, पत्नी.
**कामम्** अ. पुष्कळ, फार.
**कियत्** वि. केवढा.
**कृतधी** वि. निश्चित बुद्धीचा.
**क्री** ९ उ. विकत घेणें.
,, **वि** + विकणें.
**खड्ग** पुं. तरवार.
**गतानुगतिक** वि. गेले-

१. §२७२ (३). २. ब. व. वैपुल्यार्थी. *§१२४ (१), ३१७ (४).

त्याच्या मागून जाणारा.
**ग्रह्** ९ उ. घेणें; पकडणें; वश करणें.
**ग्रीष्म** पुं. ऊन्ह.
**छन्द** पुं. इच्छा, लहर.
**ज्ञा** ९ उ. जाणणें.
**ज्ञा (अनु)** परवानगी देणें.
,, **वि+**जाणणें.
**तप् (सम्)** १ प. प्रयो. दुःख देणें.
**तादृक्** अ. त्याप्रमाणें.
**तावत्** अ. तितकें, तेवढें
**तिल** पुं. तीळ.
**त्रय** न. तीनींचा समुदाय.
**दुष्करम्** अ. कठीण.
**नानाविध** वि. अनेक प्रकारचे.
**निकर** पुं. ढीग.
**निराकुल** वि. शांत, स्वस्थ
**नी** १ उ. माग काढणें,
**पत्र** न. पान.
**पद** न. स्थान, दर्जा.
**पद्मिनी** स्त्री. कमळीण.
**पर** वि. दुसरा; अधिक.
**पात** पुं. पडणें, पडलेला बिंदु.
**पारमार्थिक** वि. सत्यान्वेषी.
**पुण्यकृत्** वि. पुण्य करणारा.
**पू** ९ उ. शुद्ध-स्वच्छ करणें.
**प्रवाद** पुं. वदंता; बोलणें.
**प्री** ९ उ. संतुष्ट करणें.
**बन्ध्** ९ प. बांधणें.
,, **अनु+**जोडणें, मागोमाग जाणें.
,, **प्रति+**अटकाव करणें.
**भू ( सम् )** प्रयो. शक्य करणें.
**मुष्** ९ प. चोरणें.
**मृगयु** पुं. पारधी.
**यादृक्** अ. ज्याप्रमाणें.
**यावत्** अ. जितकें, जेवढें.
**रज्जु** स्त्री. दोरी.
**लुब्ध** वि. लोभी.
**वञ्चक** वि. फसविणारा.
**वणिज्** पुं. वाणी; व्यापारी.
**वहित्र** न. होडी; नौका.
**वालुका** स्त्री. वाळू.
**वियोजित** वि. ताटातूट केलेला.
**विरल** वि. फार थोडे.
**व्यग्र** वि. गोंधळलेला.
**व्यतीत** वि. गेलेला.
**शांडिलीमातृ** स्त्री. एका स्त्रीचें नांव.
**समागम** पुं. जमाव, गर्दी.
**समुत्थित** वि. उत्पन्न झालेलें.
**शूकर** पुं. रानडुकर.
**सत्य** वि. खरा.
**सुवर्णकार** पुं. सोनार.
**स्तेन** पुं. चोर.
**हत** वि. मारलेला.

## विंशः पाठः

**पूर्वतयारीः**—ष्, ह्—कारान्त शब्द; २ रा. गण—गणसापेक्ष काळ; §§ ६९, ७०, १४० ते १४४, १५१.

**उपानहौ च वासश्च धृतमन्यैर्न धारयेत् । नहि रुतमनुरौति ग्रामसिंहस्य सिंहः । मधुलिड्भिरेष बालोऽदृश्यत । मित्रध्रुक्षु पा-**

पेषु न विश्वस्यात्। जागर्ति स,सचिन्तो यः। एकः शब्दः सम्यगधीतः सम्यक्प्रयुक्तः स्वर्गे लोके कामधुग्भवति। यत्क्षितिपतिमभूतैरपि गुणैः स्तुवन्ति पुरुषाः स खलु तृष्णायाः प्रभावः। न भूमौ शयीत कदाचित्। अधीष्व भो इति गुरुः शिष्यं ब्रूयात्। किं तया क्रियते धेन्वा या न सूते न दुग्धदा। ऊर्ध्वमरुणोदयात् कदापि शयानेन न भवितव्यं कुमारेणातीतशैशवेनेत्यब्रवीन्मे माता। मधुलिहः षट् पदानि सन्ति; अतस्तस्य षट्पदः, षट्चरणः, षडंघ्रिरिति बहूनि पर्यायनामानि वर्तन्ते। षण्णां मातृणामपत्यं षाण्मातुरः कार्तिकेयः। कास्ताः षण् मातरः? कृत्तिकाः। तासामसौ षड्भिराननैः पयोऽपिबत्। तस्मात् षडानन इति नामधेयं प्राप्नोत।

'आस्तां तावत्सर्वम्। अपनयतु नः कुतूलहम्। आवेदयतु सर्वमादितः* प्रभृति कार्त्स्न्येन-आत्मनो जन्म कस्मिन् देशे, भवान् कथं जातः, केन वा नाम कृतम्, का ते माता, कस्ते पिता, कथं वेदानामागमः, कथं शास्त्राणां परिचयः, कुतः कला आसादिताः, किंहेतुकं जन्मान्तरानुस्मरणम्, उत वरप्रदानं अथवा विहंगवेषधारी कश्चिच्छन्नो निवससि, क्व वा पूर्वमुषितम् कियद्वा वयः, कथं पंजरबंधनं, कथं चांडालहस्तगमनं, इह वा कथमागमनम्' इति। वैशंपायनस्तु स्वयमुपजातकुतूहलेन सबहुमानमवनिपातिना पृष्टो मुहूर्तमिव ध्यात्वा सादरमब्रवीत्--'देव, महतीयं कथा। यदि कौतुकमाकर्ण्यताम्।'

व्यापारान्तरमुत्सृज्य वीक्षमाणो वधूमुखम्।
यो गृहेष्वेव निद्राति दरिद्राति स दुर्मतिः॥
एहि गच्छ पतोत्तिष्ठ वद मौनं समाचर।
एवमाशाग्रहग्रस्तैः क्रीडन्ति धनिनोऽर्थिभिः॥

---

१. § ११३ (४). * § २१७ (८). १. § ३१४ (२). २. § ३३८ (ऊ).

एह्यागच्छ, समाश्रयासनमिदं, कस्माच्चिराद्दृश्यसे ?
का वार्ता, ह्यतिदुर्बलोऽसि, कुशलं[3], प्रीतोऽस्मि ते दर्शनात्[4]।
एवं ये समुपागतान् प्रणयिनः प्रह्लादयन्त्यादरात्
तेषां युक्तमशंकितेन मनसा हर्म्याणि गन्तुं सदा ॥
संप्राप्तमवमानं यस्तेजसा न प्रमार्जति* ।
कस्तस्य पौरुषेणार्थो महताप्यल्पचेतसः ॥
न परेणाहृतं भक्ष्यं व्याघ्रः खादितुमिच्छति ।
एवमेव नरव्याघ्रः परलीढं न मन्यते ॥
सत्यं ब्रूयात्प्रियं ब्रूयान्न ब्रूयात्सत्यमप्रियम् ।
प्रियं च नानृतं ब्रूयादेष धर्मः सनातनः ॥
यथाल्पाल्पमदन्त्याद्यं वार्योकोवत्सषट्पदाः ॥
तथाल्पाल्पो ग्रहीतव्यो राष्ट्राद्राज्ञाब्दिकः करः ॥
सर्वं परवशं दुःखं सर्वमात्मवशं सुखम् ।
एतद्विद्यात् समासेन लक्षणं सुखदुःखयोः ॥

## शब्दार्थसंग्रह

अद् २ प. खाणें.
अधीत वि. शिकलेला.
अनुस्मरण न. आठवण
अभूत वि. नसलेलें.
अर्थ पुं. उपयोग.
अर्थिन् पुं. याचक.
अल्पचेतस् वि. क्षुद्र बुद्धीचा.
अल्पाल्पम् अ. थोडथोडें
अवनि स्त्री. पृथ्वी.
अवनिपति पुं. राजा.
अशंकित वि. निर्भय.
आगम पुं. प्राप्ति; ज्ञान.
आदितस् अ. आरंभापासून.
आद्य न. (अद्+य) खाण्याची वस्तु.
आब्दिक वि. वार्षिक.
आस् २ आ. बसणें, राहणें.
आसादित वि. मिळविलेलें
इ २ प. जाणें.
,, आ + येणें.
इ (अधि) आ. अभ्यास करणें.
उत अ. किंवा.
उपजात वि. उत्पन्न झालेला.
उपानह् स्त्री. पायताण.

---

३. अपि कुशलं ते ? ४. § ३१५ ( ७ ). * ' प्रमार्जति ' [रूप आर्ष] =प्रमार्ष्टि.

**उषित** वि. राहिलेला, वास केलेला.
**कल** वि. अस्पष्ट व मधुर
**कर** पुं. कर; पट्टी.
**कर्ण्** (आ) १० प. ऐकणें.
**कामदुह्** वि. इच्छा पुरविणारें.
**कार्त्स्न्य** न [ कृत्स्न ] सगळेपणा, पूर्णपणा.
**कुतूहल** न. जाणण्याची इच्छा.
**कौतुक** न. जिज्ञासा.
**क्षिति** स्त्री. पृथ्वी.
**ग्रस्त** वि. ग्रासलेलें.
**ग्रह** पुं. पिशाच.
**ग्रहीतव्य** वि. घेण्यास योग्य.
**ग्रामसिंह** पुं. कुत्रा
**चाण्डाल** पुं. महार, मांग इ. अतिशूद्र.
**चिरात्** अ. फार वेळानें.
**चेतस्** न. मन.
**छन्न** वि. लपलेलें, गुप्त.
**जन्मान्तर** न. दुसरा जन्म.
**जागृ** २ प. जागें होणें; जागें राहणें.

**तृष्णा** स्त्री. लोभ.
**दरिद्रा** २प. दरिद्री होणें
**दुग्धद** वि. दूध देणारें.
**दुर्मति** वि. वाईटबुद्धीचा.
**द्रा** (नि) ३ प. निजणें.
**नी** (अप) १ उ. दूर नाहींसें करणें.
**धृत** वि. धारण केलेलें, घातलेलें.
**पंजर** न. पिंजरा.
**परिचय** पुं. ओळख; ज्ञान
**प्रणयिन** वि. प्रेम करणारा
**प्रदान** न. दान, देणें.
**प्रयुक्त** वि. वापरलेला.
**बन्धन** न. अटकाव.
**मधुलिह्** पुं. भुंगा.
**ब्रू** २ उ. बोलणें.
**मन्** ४ आ. मानणें, इच्छिणें.
**मशक** पुं. घुंगुरटें, डांस.
**मित्रद्रुह्** वि. मित्रद्रोही.
**मृज्** २ प. धुणें; स्वच्छ करणें.
,, **प्र** = ,,
**मौन** न. स्तब्धपणा.
**राष्ट्र** न. प्रजा, लोक.
**रु** २ प. ओरडणें.
,, **अनु** + ( प्रमाणें ) ओरडणें.

**रुत** न. ओरडणें, आवाज.
**रूप्** (नि) १० प. न्याहाळून पाहणें.
**लीढ** वि. चाटलेलें.
**वत्स** पुं. वासरूं.
**वधू** स्त्री. पत्नी, बायको.
**वयस्** न. वय.
**वश** पुं. ताबा.
**वार्योकस** पुं. [ वारि ओकस् ] जळू.
**वासस्** न. वस्त्र.
**विद्** (आ) १० उ. कळविणें.
**विहंग** पुं. पक्षी.
**व्यापार** पुं. उद्योग, क्रिया.
**श्रि** (समा) १उ आश्रय करणें.
**श्वस्** २ प. श्वास घेणें.
,, **वि**+विश्वास ठेवणें.
**षट्पद** पुं. भ्रमर.
**षडंघ्रि** पुं. ,,
**सनातन** वि. [सना+तन शाश्वत, चिरकालिक.
**समास** पुं. संक्षेप
**संप्राप्त** वि. मिळविलेलें.
**सहसा** अ. एकदम.
**सादरम्** अ. आदरानें.
**स्तु** २ उ. स्तुति करणें.

हर्म्य न. वाडा. ह्लाद् (प्र) १ आ. प्रयो. आनंद देणें.

# एकविंशः पाठः

पूर्वतयारीः—२ रा गण चालू; अव्ययीभाव. §§ १४५ ते १४६, ३४५.

सर्वः सगन्धेषु विश्वसिति । न हि श्रुतिशतमपि शीतोऽग्निरप्रकाशो वेति वदत् प्रामाण्यमुपैति । पिण्डमुत्सृज्य करं लेढि । आम्रान् पृष्टः कोविदारानाचष्टे । के वा न स्युः परिभवपदं निष्फलारंभयत्नाः ? गुणी गुणं वेत्ति, न वेत्ति निर्गुणः । कपाले मार्जारः पय इति करॉल्लेढि शशिनः । त्वया जगत् प्राणिति विश्वनाथ । अग्रतो यातु भवान्, अहमनुपदमेवान्वेमि भवन्तम् । कुतश्चंद्र ओषधीश इत्यभिधीयते ? यतोऽसावोषधीनामीष्टे । उक्तं च भगवता–' पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः ' इति ।

नवं हि द्रव्यं येन येनार्थजातेनोपदिह्यते तत्तदाचूषति, एवं कुमारो नवबुद्धिर्यद्यदुच्यते तत्तच्छास्त्रोपदेशमिवाभिजानाति । तस्माद्धर्ममर्थं चास्योपदिशेन्नाधर्ममनर्थं च ।

स्पृशन्नपि गजो हन्ति जिघ्रन्नपि भुजंगमः ।
हसन्नपि नृपो हन्ति मानयन्नपि दुर्जनः ॥
पठतो नास्ति मूर्खत्वं जपतो नास्ति पातकम् ।
मौनिनः कलहो नास्ति न भयं चास्ति जाग्रतः ॥
अप्राप्तकालं वचनं बृहस्पतिरपि ब्रुवन् ।
प्राप्नोति बुद्ध्यवज्ञानमपमानं च पुष्कलम् ॥
मणिर्लुठति पादेषु काचः शिरसि धार्यते ।
यथैवास्ते तथैवास्तां काचः काचो मणिर्मणिः ॥
हारं वक्षसि केनापि दत्तमज्ञेन मर्कटः ।

---

१. § ३०५ (अ). २. § ३१५ (२). ३. § ३१८ (१३). ४. § ३१८ (१६).

लेढि जिघ्रति संक्षिप्य करोत्युन्नतमासनम् ॥
विधाय वैरं सामर्षे नरोऽरौ य उदासते ।
प्रक्षिप्योदर्चिषं कक्षे शेरते तेऽभिमारुतम् ॥
यथोद्धरति निर्दाता कक्षं, धान्यं च रक्षति ।
तथा रक्षेन्नृपो राष्ट्रं हन्याच्च परिपंथिनः ॥
अशासंस्तस्करान्यस्तु वलिं गृह्णाति पार्थिवः ।
तस्य प्रक्षुभ्यते राष्ट्रं स्वर्गाच्च परिहीयते ॥
विद्यागमार्थं पुत्रस्य वृत्त्यर्थं यतते च यः ।
पुत्रं सदा साधु शास्ति प्रीतिकृत्स पितानृणी ॥
सर्वद्रव्येषु विद्यैव द्रव्यमाहुरनुत्तमम् ।
अहार्यत्वादनर्घ्यत्वादक्षयत्वाच्च सर्वदा ॥
करोति पापं योऽज्ञानान्नात्मनो वेत्ति च क्षयम् ।
प्रद्वेष्टि साधुवृत्तांश्च स लोकस्यैति वाच्यताम् ॥
पुष्पाणीव विचिन्वन्तमन्यत्रगतमानसम् ।
अनवाप्तेषु कामेषु मृत्युरभ्येति मानवम् ॥
व्रजन्ति ते मूढधियः पराभवं,
भवन्ति मायाविषु ये न मायिनः ।
प्रविश्य हि घ्नन्ति शठास्तथाविधान्
असंवृतांगान्निशिता इवेषवः ॥
प्राक्पादयोः पतति, खादति पृष्ठमांसं,
कर्णे कलं किमपि रौति शनैर्विचित्रम् ।
छिद्रं निरूप्य सहसा प्रविशत्यशंकः,
सर्वं खलस्य चरितं मशकः करोति ॥
कार्पण्यदोषोपहतस्वभावः पृच्छामि त्वां धर्मसंमूढचेताः ।

---

१. § ३४५ (४). २. § ६२ नृ पहा. ३. § २८७, ३४१. ४. § ११३.
५. 'अस्तीति जनाः' अध्याहृत.

यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम्॥

कस्यापि कोऽप्यतिशयोऽस्ति स तेन लोके
ख्यातिं प्रयाति, नहि सर्वविदस्तु सर्वे ।
किं केतकी फलति, किं पनसः सपुष्पः,
किं नागवल्ल्यपि च पुष्पफलैरुपेता ॥
निःस्वो वष्टि शतं, शती दशशतं, लक्षं सहस्राधिपो
लक्षेशः क्षितिपालतां, क्षितिपतिश्चक्रेशतां वांछति ॥
चक्रेशः पुनरिन्द्रतां सुरपतिर्ब्राह्मं पदं वांछति
ब्रह्मा शैवपदं, शिवो हरिपदमाशावधिं को गतः ॥

## शब्दार्थसंग्रह

अक्षय वि. क्षय-हास न पावणारें.
अज्ञ वि. अडाणी.
अतिशय पुं. आधिक्य.
अन् २ प. श्वासोच्छ्वास करणें.
,, प्र+जिवंत असणें.
अनर्घ्य वि. अमोलिक.
अनुत्तम वि. सर्वोत्तम.
अनृणिन् वि. ऋणमुक्त.
अप्राप्तकाल वि. अकालिक.
अभि अ. कडे.
अभिधाय अ. बोलून.
अमर्ष पुं. क्रोध.
अरि पुं. शत्रु.
अर्थ पुं. वस्तु, पदार्थ.
अवज्ञान न. तिरस्कार.
अवधि पुं. अन्त.
अवाप्त वि. मिळविलेलें.
असु प. (नि. ब.) प्राण.
अहार्य वि. हरण करण्यास अशक्य.
आदाय अ. घेऊन.
आस् ( उद् ) २ आ. उदासीन राहणें; स्वस्थ बसणें.
इ ( अभि ) २ प. जवळ जाणें; गांठणें.
इषु पुं. बाण.
ईश् २ आ. प्रभुत्व- सत्ता चालविणें.
उदर्चिस् पुं. अग्नि.
उन्नत वि. उंच.
उपेत वि. युक्त.
ओषधि स्त्री. वनस्पति.
कक्ष पुं. वाळलेलें गवत; गवत.
कपाल पुं. न. खापर.
कर पुं. किरण.
कार्पण्य न. [कृपण+य] मनोदौर्बल्य.
केतकी स्त्री: केवडा.
कोविदार पुं. कांचनाचें झाड.
क्षितिपाल पुं. राजा.
क्षिप् ( सम् ) ६ प. गुंडाळणें.

---

१. § ३१६ (५). २. § ३१४ (६) ३. § ११५.

**क्षुभ्** ( प्र )४ प. खवळणें
**ख्याति** स्त्री. प्रसिद्धी.
**गन्ध** पुं. संबंध, नातें.
**गुणिन्** वि. गुणवान्.
**घ्रा** (जिघ्र)१ प. हुंगणें.
**चक्रेश** पुं. चक्रवर्ती राजा.
**चक्ष्** २ आ. सांगणें.
,, आ+,,
**चि** ( वि ) ५ उ. शोधणें.
**चूष्** (आ.)१ प. शोषणें.
**जात** न. समूह.
**ज्ञा** (अभि) ९ प. मानणे, समजणें.
**तथाविध** वि. त्या प्रकारचें.
**तस्कर** पुं. चोर.
**दत्त** वि. दिलेलें.
**दिह्** (उप) २ उ. माखणें.
**द्रव्य** न. पदार्थ.
**द्विष्** २ प. द्वेष करणें.
,, प्र+ ,,
**धर्म** पुं. कर्तव्य.
**धा** (अभि) ३ उ. म्हणणें, बोलणें.
**नागवल्ली** स्त्री. पानवेल.
**निर्दातृ** वि. शेतकरी.
**निशित** वि. तीक्ष्ण.
**निःस्व** वि. [स्वं=धन] निर्धन.
**पनस** पुं. फणस.
**पयस्** न. दूध.
**परिपन्थिन्** पुं. शत्रु.
**परिभव** पुं. तिरस्कार.
**पुष्कल** वि. पुष्कळ.
**प्रीतिकृत्** वि. प्रेम करणारा.
**फल्** १ प. फळ धरणें.
**वलि** पुं. कर.
**ब्राह्म** वि. ब्रह्मदेवाचें.
**भवितव्य** वि. असण्यास होण्यास योग्य.
**भुजंगम** पुं. साप.
**मर्कट** पुं. माकड.
**मानस** न. मन.
**मायाविन्** वि. कपटी.
**मायिन्** ,, ,,
**या** ( प्र ) २ प. जाणें
**रसात्मक** वि. जलमय.
**राष्ट्र** न. प्रजा, लोक.
**लिह्** २ उ. चाटणें.
**लुठ् लुण्ठ्** ६ प. लोळणें.
**वक्षस्** न. छाती.
**वच्** २ प. बोलणें.
**वश्** २ प. इच्छिणें.
**वाच्यता** स्त्री. निंदा.
**विधाय** अ. करून.
**विश्वनाथ** पुं. परमेश्वर.
**शठ** पुं. धूर्त लबाड.
**शतिन्** वि. शंभर नाणीं बाळगणारा.
**शास्** २ प. उपदेश करणें; शिस्त लावणें; शिक्षा करणें.
**शी** २ आ. निजणें, पडून राहणें.
**शैव** वि. शिवाचें.
**शौण्डिकी** स्त्री. कलालीण.
**श्रेयस्** न. कल्याण.
**सगन्ध** वि- [ समानः गन्धः यस्य ] नातलग, जातभाई.
**संमूढ** वि. संशयग्रस्त.
**सर्वविद्** वि. सर्वज्ञ.
**सवृत** वि. आच्छादलेलें
**सोम** पुं. चंद्र.
**हन्** २ प. ठार मारणें, नाश करणें.
**हरि** पुं. विष्णु.
**हा** (परि) ३ प. ( कर्मणि ) कमी पडणें. असणें. ( पंचमीशीं प्रयोग. )
**हृ** ( उद् ) १उ. उपटून काढणें.

## द्वाविंशः पाठः

पूर्वतयारीः—र्‌कारान्त शब्द व कांहीं व्यंजनान्त अनियमित शब्द. §§ ६४, ७१, ७३, ७८, ८०.

पैतृकमश्वा अनुहरन्ते मातृकं गावः । न मूत्रं पथि कुर्वीत । श्वा यदि क्रियते राजा स किं नाश्नात्युपानहम् । न गर्दभा वाजिधुरं वहन्ति । शिवास्ते पन्थानः सन्तु । स्वस्ति नो मघवा करोतु, हन्तु पाप्मानं योऽस्मान्द्वेष्टि, यं च वयं द्विष्मः । कियद्भिरहोभिर्भवान्वाराणस्या हरिद्वारमुपागच्छत् ? अहरहः सन्ध्यामुपासीत द्विजः ।

यदि सन्ति गुणाः पुंसां विकसन्त्येव ते स्वयम् ।
नहि कस्तूरिकामोदः शपथेन विभाव्यते ॥
गावो गन्धेन पश्यन्ति वेदैः पश्यन्ति वै द्विजाः ।
चारैः पश्यन्ति राजानश्चक्षुर्भ्यामितरे जनाः ॥
नवमासधृतं गर्भं भास्करस्य गभस्तिभिः ।
पीत्वा रसं समुद्राणां द्यौः प्रसूते रसायनम् ॥
अद्भिर्गात्राणि शुध्यन्ति मनः सत्येन शुध्यति ।
विद्यातपोभ्यां भूतात्मा बुद्धिर्ज्ञानेन शुध्यति ॥
चक्रिणो दशमीस्थस्य रोगिणो भारिणः स्त्रियाः ।
स्नातकस्य च राज्ञश्च पन्था देयो वरस्य च ॥
मृगा मृगैः संगमनुव्रजन्ति, गावश्च गोभिस्तुरगास्तुरंगैः ।
मूर्खाश्च मूर्खैः सुधियः सुधीभिः समानशीलव्यसनेषु सख्यम्॥
नक्रः स्वस्थानमासाद्य गजेन्द्रमपि कर्षति ।
स एव प्रच्युतः स्थानाच्छुनापि परिभूयते ॥

---

१. § ३१५ (५). २. § ३१८ (१६).

गुणानामेव दौरात्म्याद्धुरि धुर्यो नियुज्यते ।
असंजातकिणस्कन्धः सुखं स्वपिति गौर्गलिः ॥
ऊर्ध्वं प्राणा ह्युत्क्रामन्ति यूनः स्थविर आयति* ।
प्रत्युत्थानाभिवादाभ्यां पुनस्तान्प्रतिपद्यते ॥
विप्राणां ज्ञानतो ज्यैष्ठ्यं, क्षत्रियाणां तु वीर्यतः ।
वैश्यानां धान्यधनतः, शूद्राणामेव जन्मतः ॥
न तेन वृद्धो भवति येनास्य पलितं शिरः ।
यो वै युवाप्यधीयानस्तं देवा स्थविरं विदुः
न सीदन्नपि धर्मेण मनोऽधर्मे निवेशयेत् ।
अधार्मिकाणां पापानामाशु पश्यन्विपर्ययम् ॥ १ ॥
नाधर्मश्चरितो लोके सद्यः फलति गौरिव ।
शनैरावर्तमानस्तु कर्तुर्मूलानि कृन्तति ॥ २ ॥
यदि नात्मनि पुत्रेषु, न चेत्पुत्रेषु नप्तृषु ।
नत्वेव तु कृतोऽधर्मः कर्तुर्भवति निष्फलः ॥ ३ ॥
अधर्मेणैधते तावन्नरो भद्राणि पश्यति ।
ततः सपत्नाञ्जयति समूलन्तु विनश्यति ॥ ४ ॥
परित्यजेदर्थकामौ यौ स्यातां धर्मवर्जितौ ।
गीर्भिर्गुरूणां परुषाक्षराभि
स्तिरस्कृता यान्ति नरा महत्त्वम् ।
अलब्धशाणोत्कषणा नृपाणां
न जातु मौलौ मणयो वसन्ति ॥
धर्मं चाप्यसुखोदर्कं लोकविक्रुष्टमेव च ॥५॥ मनुस्मृतिः अ ४
'मन्ये चागणितपितृमरणशोकस्य निर्घृणतैव केवलमियं मम

---

३. § १२४ पंचम्यर्थे तस्. ४. § 'वयसा' *३१९ (५). १. 'फलति'

सलिलपानबुद्धिः । अद्यापि दूर एव सरस्तीरम् । तथा हि जलदेवतानूपुररवानुकारि दूरेऽद्यापि कलहंसविरुतमेतत् । अस्फुटानि श्रूयन्ते सारसरसितानि । विप्रकर्षादाशामुखविसर्पणविरलः संचरति नलिनीखंडपरिमलः । दिवसस्येयं कष्टा दशा वर्तते । तथा हि रविरम्बरतलमध्यवर्ती स्फुरन्तमातपमनवरतमनलधूलिनिकरमिव विकिरति करैः । अधिकामुपजनयति तृषाम् । संतप्तपांसुपटलदुर्गमा भूः । अतिप्रबलपिपासावसन्नानि गन्तुमपि मे नालमंगकानि अप्रभुरस्मि आत्मनः । सीदति मे हृदयम् । अंधकारतामुपयाति चक्षुः । अपि नाम खलो विधिरनिच्छतोऽपि मे मरणमथोपपादयेत् । कादंबरी.

## शब्दार्थसंग्रह

अंगक न. अवयव.
अनल पु. विस्तव.
अनवरत वि. सतत.
अनुकारिन् त्रि. सारखें.
अभिवाद पुं. वंदन करणें
अंबर न. आकाश.
अलम् अ. पुरे.
अवसन्न वि. गळाठलेलें.
अहन् न. दिवस.
आमोद पुं. सुवास.
आयत् वि. ( आ+इ+अत् ) येणारा.
आशा स्त्री. दिशा.
आशु अ. लवकर.
उत्कषण न. घांसणें.
उदर्क पुं. शेवट, परिणाम
कलहंस पुं. राजहंस.
कस्तूरिका स्त्री. कस्तुरी.
कष्ट वि. त्रासदायक.
किण पुं. घट्टा.
कृत (कृन्त्) ६ प. कापणें.
कृष् १ प. ओढणें.
कॄ (वि) ६ प. इतस्ततः फेकणें, विखुरणें.
क्रम् ( उद् ) १ प. बाहेर येणें.
खंड पुं., न. समुदाय.
गजेन्द्र पुं. श्रेष्ठ हत्ती.
गभस्ति पुं. किरण.
गालि पुं. खोंड.
गिर् स्त्री. भाषण.
गो पुं. बैल.
गो स्त्री. गाय.
चक्रिन् वि. गाडीतून जाणारा.
चार पुं. हेर.
ज्यैष्ठ्य न. श्रेष्ठत्व.
तुरग पुं. घोडा.
तुरंग पुं. घोडा.
दशमी स्त्री. आयुष्याचें दहावें शतक.
दशमीस्थ वि. ९ पासून

---

२. § २४१. ३. § ११८ (३).



१०० वर्षें वयाचा.
दायाद पुं. दाईज, वारस.
दुर्गम वि. जाण्यास कठिण
देय वि. देण्यास योग्य.
दौरात्म्य न. दुष्टपणा.
द्यो स्त्री. आकाश.
धुर् स्त्री. जूं; कार्यभार.
धुर्य [ धुर् + य ] वि. कार्यभार घेण्यास समर्थ.
धूलि पुं., स्त्री. धूळ.
नक्र पुं. सुसर; मगर.
नप्तृ पुं. नातू.
नलिनी स्त्री. कमळीण.
नवन् वि. नऊ.
नाम अ. इच्छार्थी.
निकर पुं. ढीग.
निर्घृण वि. निर्दय.
नूपुर पुं. न. पैजण.
पटल न. समूह, ढीग.
पथिन् पुं. मार्ग.
पद् ( उप ) ४ आ. प्रयो. घडवून आणणें.
परिमल पुं. सुगंध.
परुष वि. कठोर, तीक्ष्ण.
पलित वि. पांढरे केंस झालेलें.
पाप्मन् वि. दुष्ट, घातक.
पांसु पुं. धुरळा.

पुम्स् पुं. पुरुष.
पैतृक न. पित्याचे गुण.
प्रत्युत्थान न. सन्मानार्थ उठणें.
भारिन् वि. ओझेवाला.
भास्कर पुं. सूर्य.
भू ( परि ) १ प. पराभव करणें.
,, वि+प्रयो. व्यक्त करणें.
भूतात्मन् पुं. जीवात्मा.
मघवन् पुं. इंद्र.
मातृक न. आईचे गुण.
रण पुं., न. युद्ध.
रणांगण न. युद्धभूमि.
रव पुं. आवाज.
रस पुं. पाणी.
रसायन न. [ रस + अयन जराव्याधि-नाशक औषध ( येथें ‘ पाणी ’ ).
रसित न. आवाज़.
रोगिन् वि. रोगी.
वर पुं. नवरदेव.
वर्जित वि. रहित.
वाजिन् पुं. घोडा.
विक्रुष्ट वि. निंदिलेलें.
विधि पुं. दैव.
विपर्यय पुं. उलट स्थिति

विप्रकर्ष पु. दूरपणा.
विरुत न. ओरडणें.
विश् ( नि ) ६ प. प्रयो. ठेवणें.
विसर्पण न. पसरणें.
वृत् ( आ ) १ आ. परत येणें; जवळ जाणें.
व्यसन न. संवय, नाद.
वेद पुं. विद्या, ज्ञान.
व्रज् ( अनु ) १ प. मागून जाणें.
शाण पुं. सहाण.
शिव वि. कल्याणप्रद.
शील न. स्वभाव.
श्वन् पुं. कुत्रा.
सख्य न. ( सखि+य ) मैत्री.
सद् ( आ ) १ प. प्रयो. मिळविणें; गांठणें.
सद्यस् अ. लगेच, सध्यां.
सपत्न पुं. शत्रु.
सारस पुं. सारस पक्षी.
सुधी वि. चांगल्या बुद्धिचा
सू (प्र) २ आ. प्रसवणें.
स्कन्ध पुं. खांदा.
स्थविर वि. म्हातारा.

स्नातक पुं. ब्रह्मचर्यव्रत संपविलेला, समाप्त-विद्य, सोडमुंज झालेला. स्फुट् ६ प. उमलणें स्फुर् ६ प प्रकाशणें. स्वप् २ प. निजणें. स्वस्ति स्त्री. न. कल्याण ह्व (अनु) १ उ. वळणावर जाणें; अनुकरण करणें.

## त्रयोविंशः पाठः

पूर्वतयारीः—७ वा गण—गणसापेक्षकाळ. § १६५.

यः कुरुते स भुंक्ते । कथं भवाननुचिते कर्मणि कुमारमिमं नियुंक्ते ? एकः स्वादु न भुञ्जीत । यथा कश्चिद्बालिशः शाखामारुह्य वृक्षस्य, तां स्वयं छिन्द्यात्तथेदं तव कृत्यं प्रतिभाति मे । ह्यो मम कनीयस्याः स्वसुर्हस्तात् सुवर्णकंकणमाच्छिनत्तस्करः कश्चित् । न च्छिन्द्यात्करजैर्नखम् । गां धयन्तं वत्सं मोपरुन्द्धि । स भवन्तमभियोक्तुमुद्युंक्ते ।

अग्निस्तेजो महल्लोके गूढास्तिष्ठति दारुषु ।
न चोपयुंक्ते तद्दारु यावन्नोद्दीप्यते परैः ॥
स एव खलु दारुभ्यो यदा निर्मथ्य दीप्यते ।
तद्दारु च वनं चान्यान्निर्दहत्याशु तेजसा ॥
राजा प्रशास्ति धर्मेण स्वकर्मनिरताः प्रजाः ।
विकर्मोणश्च ये केचित्तान्युनक्ति स्वकर्मसु ॥
न किंचिदवमन्येत सर्वस्य शृणुयान्मतम् ।
बालस्याप्यर्थवद्वाक्यमुपयुञ्जीत पण्डितः ॥
यद् ध्यायति यत्कुरुते धृतिं बध्नाति यत्र च ।
तदवाप्नोत्ययत्नेन यो हिनस्ति न किंचन ॥
यज्जीव्यते क्षणमपि प्रथितं मनुष्यै-
र्विज्ञानशौर्यविभवार्यगुणैः समेतम् ।
तन्नाम जीवितमिह प्रवदन्ति सन्तः

१. § २०५ (अ).

काकोऽपि जीवति चिराय बलिं च भुंक्ते ॥
तस्मात्त्वमुत्तिष्ठ यशो लभस्व जित्वा शत्रून्भुंक्ष्व राज्यं समृद्धम् ।
मयैवैते निहताः पूर्वमेव निमित्तमात्रं भव सव्यसाचिन् ॥
उपायेन यथा व्यालो गजः सिंहोऽपि साध्यते ।
भूमिष्ठाः स्वर्गमायान्ति, वज्रं भिन्दन्त्युपायतः ॥
वहति जलमियं पिनष्टि गन्धानियामियमुद्ग्रथते स्रजो विचित्राः ।
मुसलमिदमियं च पातकाले मुहुरनुयाति कलेन हुंकृतेन ॥
संपन्नतरमेवान्नं दरिद्रा भुञ्जते सदा ।
क्षुत् स्वादुतां जनयति सा चाढ्येषु सुदुर्लभा ॥
येन येनास्मान्पाण्डवा अभ्ययुञ्जत तं तमाचक्ष्वेति धृतराष्ट्रो सञ्ज-यमन्वयुंक्त तदा सोऽब्रवीत्–
यः संश्रयः पाण्डवानां देवानामिव वासवः ।
तेन वो वासुदेवेन पाण्डवा अभ्ययुञ्जत ।

## शब्दार्थसंग्रह

अनुचित वि. अयोग्य.
अर्थवत् वि. अर्थपूर्ण.
आढ्य वि श्रीमंत.
आप् (अव) ५ प. मिळविणें.
आर्य वि. श्रेष्ठ, उच्च.
आशु अ. लवकर.
करज न. नख.
कल वि. मधुर व अस्पष्ट
गन्ध पुं. सुवास.
गूढ वि. ( गुह् + त ) गुप्त, लपलेला.
ग्रथ् ( उद् ) १ उ. गुंफणें.
छिद् ७ उ. तोडणें.
छिद् ( आ ) + हिस-कावून घेणें.
तस्कर पुं. चोर.
दारु न. लांकूड.
दीप् ४ आ. प्रयो. पेट-वणें.
,, उद् + ,,
धृति स्त्री. धैर्य,चिकाटी, दृढनिश्चय.
धे १ प. पिणें, शोषणें.
ध्यै १ प. ध्यान-चिन्तन करणें.
निहित वि. ठेवलेलें.
पात पुं. पडणें.
पिष् ७ प. चूर्ण करणें; उगाळणें.
प्रथित वि. प्रख्यात.
बालिश वि. मूर्ख.
भिद् ७ उ. फोडणें.
भुज् ७ आ. खाणें; भोगणें

२. ' तथा ' अध्याहृत.

भूमिष्ठ वि. ( भूमौ तिष्ठति ) पृथ्वीवरील.
मुसल पुं, न. मुसळ.
मुहुस् अ. वारंवार.
या (अनु) २ प. मागून जाणें. अनुकरण करणें
,, उप + जवळ जाणें.
युज् ७ उ. जोडणें.
,, अनु+ आ. विचारणें.
,, अभि +, आ. हल्ला करणें.
,, उद् + उद्योग-खटपट करणें.
,, उप + खाणें, भक्षणें; उपयोग करणें.
,, नि + नेमणें.
रुध् ७ उ. अडथळा करणें.
रुध् ( उप ) अडथळा करणें.
वास पुं. राहणें.
वासव पुं. इन्द्र.
वासुदेव पुं. कृष्ण.
विज्ञान न. ज्ञान, विद्या.
विभव पुं. वैभव.
व्याल पुं. साप.
समेत वि. युक्त, सहित.
संपन्न वि. स्वादिष्ट.
सव्यसाचिन् पुं. अर्जुन.
संश्रय पुं. आधार, आश्रय.
साध् ४, ५ प. प्रयो. कह्यांत आणणें, वश करणें.
स्वादु वि. गोड, रुचकर.
हिंस् ७ प. इजा-नाश करणें.
हुंकृत न. हूं हूं असा आवाज.

## चतुर्विंशः पाठः

पूर्वतयारीः—२ रा गण—गणसापेक्षकाळ. §§ १५७ ते १६३.

काचः कांचनसंसर्गाद् धत्ते मारकतीं द्युतिम्। नार्यः[1] कदापि विजहाति स्वमुदारवृत्तम्। नहि करिणि दृष्टे चीत्कारेण तमनुमिमतेऽनुमातारः। नोच्छिष्टं कस्यचिद्दद्यात्[2]। पठन्तोऽप्यपठद्भिरतिसंधीयमाना बहवो दृश्यन्ते। मृत्योर्बिभेषि[3] किं बाल, न स भीतं विमुञ्चति। यौवने सदलंकाराः शोभां बिभ्रति सुभ्रुवः मलिनानि परिदधानो वसनानि लोकैर्नाद्रियते नरः। पयोऽपि शौंडिकीहस्ते वारुणीत्यभिधीयते। भवति, भिक्षां देहीति भिक्षां चरन्ब्रह्मचारी ब्रूते।

अपत्यदारं[4] मातापितरौ भ्रातॄनप्राप्तव्यवहारान् भगिनीः कन्या विधवाश्चाबिभ्रतः शक्तिमतो द्वादशपणो दण्डोऽन्यत्र पतितेभ्योऽन्यत्र मातुः।

१.=न आर्यः २. § ३१८ (१६). ३. § ३१७ ( ३ ). ४. § ३५२

पीनो देवदत्तो दिवा न भुंक्ते। भोजनाभावे पीनत्वं न संभवति। अतो रात्रौ भुंक्ते इत्यनुमीयते।

मूढ जहीहि धनागमतृष्णां, कुरु तनुबुद्धे मनसि वितृष्णाम्।
क्लेशः फलेन हि पुनर्नवतां विधत्ते।
नाहं कामान्न संरंभान्न द्वेषान्नार्थकारणात्।
न हेतुवादाल्लोभाद्वा धर्मं जह्यां कथंचन॥
यद्ददासि विशिष्टेभ्यो यच्चाश्नासि दिने दिने।
तत्ते वित्तमहं मन्ये शेषं कस्यापि रक्षसि॥
विद्या ददाति विनयं विनयाद्याति पात्रताम्।
पात्रत्वाद् धनमाप्नोति धनाद् धर्मं ततः सुखम्॥
यश्च काष्ठमयो हस्ती यश्च चर्ममयो मृगः।
यश्च विप्रोऽनधीयानस्त्रयस्ते नाम बिभ्रति॥
अनादेयं नाददीत परिक्षीणोऽपि पार्थिवः।
न चादेयं समृद्धोऽपि सूक्ष्ममप्यर्थमुत्सृजेत्।
यो हि दत्वा द्विपश्रेष्ठं कक्ष्यायां कुरुते मनः।
रज्जुस्नेहेन किं तस्य त्यजतः कुंजरोत्तमम्॥
ग्रहाणां चरितं स्वप्नो निमित्तौत्पातिकं तथा।
फलन्ति काकतालीयं तेभ्यः प्राज्ञा न बिभ्यति॥
सहसा विदधीत न क्रियामविवेकः परमापदां पदम्।
वृणते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः॥
दुर्बोधं यदतीव तद्विजहाति स्पष्टार्थमित्युक्तिभिः
स्पष्टार्थेष्वति विस्तृतिं विदधति व्यर्थैः समासादिकैः।
अस्थानेऽनुपयोगिभिश्च बहुभिर्जल्पैर्भ्रमं तन्वते
श्रोतॄणामिति वस्तुविप्लवकृतः प्रायेण टीकाकृतः॥

---

५. = हेतु, उद्देश. ६. § ३१७ (५). ७. § ११६ (१). ८. § २८१ (ग). ९. § ३१५ (७).

## शब्दार्थसंग्रह

**अनादेय** वि. न घेण्याजोगें.
**अनुमातृ** पुं. अनुमान करणारा.
**अन्यत्र** अ. खेरीज, वांचून.
**आदेय** वि. घेण्यास योग्य.
**उच्छिष्ट** वि. उष्टें.
**उदार** वि. श्रेष्ठ.
**औत्पातिक** न. [ उत्पात +इक ] उत्पात.
**कक्ष्या** स्त्री. हत्तीचा साखळदंड. दोरी.
**काकतालीयम्** अ. यदृच्छेनें, सहजीं.
**कांचन** न. सोनें.
**काष्ठमय** वि. लांकडाचें.
**कुंजर** पुं. हत्ती.
**चरित** न. जाणें, गति.
**चर्मन्** न. चामडें.
**चीत्कार** पुं. हत्ती, गाढव इत्यादींचा आवाज.
**तनु** वि. अल्प.
**दा** ३ उ. देणें.
,, **आ**+घेणें.
**दार** पुं. (नि. ब.) पत्नी.
**दृ** (आ) ६ आ. मान देणें.
**द्युति** स्त्री. कांति, शोभा.
**द्विप** पुं. हत्ती.
**धा** ३ उ. ठेवणें; धारण करणें.
,, **अभि**+म्हणणें, बोलणें.
,, **परि**+पांघरणें, अंगांत घालणें.
,, **वि** + करणें.
,, **अतिसम्**+फसाविणें.
**निमित्त** न. शकून, चिन्ह.
**पण** पुं. पैसा ( नाणें ).
**पतित** वि. बहिष्कृत.
**परिक्षीण** वि. निर्धन.
**पात्रता** स्त्री. योग्यता.
**पात्रत्व** न. योग्यता.
**पीन** वि. लठ्ठ.
**प्राज्ञ** पुं. शहाणा, विद्वान
**बाल** पुं. मूर्ख, भोळसर
**भवती** स्त्री बाईसाहेब.
**भी** ३ प. भिणें.
**भू** (**सम्**) १ प. संभवणें.
**भृ** ३ पं. पोसणें; देणें; धारण करणें.
**भ्रू** स्त्री. भुवई.
**मनः कृ** इच्छिणें.
**मा** ३ आ. मोजणें.
,, **अनु**+अनुमान करणें.
**मारकत** वि. [**मरकतं**] पाचेचें.
**मुच्** (**वि**) ६ प. सोडणें
**वसन** न. वस्त्र.
**वारुणी** स्त्री. लोभ नसणें, संतुष्टपणा.
**वितृष्णा** स्त्री. लोभ नसणें, संतुष्टपणा.
**विप्लव** पुं. घोटाळा, गोंधळ.
**विमृश्यकारिन्** वि. विचार करून करणारा
**विशिष्ट** वि. श्रेष्ठ.
**व्यवहार** पुं. व्यवहारयोग्य वयोवस्था, वयांत येणें )
**शौण्डिकी** स्त्री. कलालीण
**संरंभ** पु. क्रोध.
**संसर्ग** पुं. सहवास.
**सुभ्रू** स्त्री. सुंदर स्त्री.
**हस्तिन्** पुं. हत्ती.
**हा** ३ प. टाकणें.
,, **वि**+टाकणें, सोडणें.
**हेतुवाद** पुं. तर्कट, श्रद्धाहीन तर्क.

## पञ्चविंशः पाठः

**पूर्वतयारी**:—अनद्यनतन व सामान्य भविष्यकाळ; क्रियातिपत्त्यर्थ. §§ १८१ ते १९२. शिवाय १६९ ते १७१. २८० आणि २८५.

युध्यस्व जेतासि रणे सपत्नान् । श्वः प्रातरेव गन्तास्मि स्वग्रामम् । छिन्नबन्धे मत्स्ये पलायिते धीवरो भणति 'धर्मो मे भविष्यति' इति ! अन्तर्भेदाकुलं गेहं न चिराद्विनशिष्यति । कः श्रद्धास्यति भूतार्थं, सर्वो मां तुलयिष्यति । नहि नटः सुशिक्षितोऽपि स्वस्कन्धमारोढुं शक्ष्यति ।

मत्समो हि गदायुद्धे पृथिव्यां नास्ति कश्चन ।
नासीत् कश्चिदतिक्रान्तो भविता न च कश्चन ॥
यस्य नास्ति स्वयं प्रज्ञा शास्त्रं तस्य करोति किम् ।
लोचनाभ्यां विहीनस्य दर्पणः किं करिष्यति ॥
न कश्चिदपि जानाति किं कस्य श्वो भविष्यति ।
अतः श्वःकरणीयानि कुर्यादद्यैव बुद्धिमान् ॥
वक्तारः किं करिष्यन्ति श्रोता यत्र न विद्यते ।
नग्नक्षपणके देशे रजकः किं करिष्यति ॥
अहमप्यनुरूपस्ते वयस्यो ज्ञास्यसे शनैः ।
न तु वक्तुं समर्थोऽहं स्वयमात्मगतान्गुणान् ॥
यदा मां चैव भार्यां च द्रष्टासि भृशदुर्बलाम् ।
न तदा जीवितेनार्थो भविता तव संजय ।
उत्तिष्ठमानस्तु परो नोपेक्ष्यः पथ्यमिच्छता ।
समौ हि शिष्टैराम्नातौ वर्त्स्यन्तावामयः स च ॥
यदि न प्रणयेद्राजा दण्डं दण्ड्येष्वतंद्रितः ।
शूले मत्स्यानिवापक्ष्यन् दुर्बलान्बलवत्तराः ॥

---

१. § ३१५ (७) २. § ३०५ (अ). ३. § ३१५ (७) ४. § 'पच्'चें रूप.

अथान्तरिक्षे वागासीद्दिव्यरूपा मनोरमा ।
सहस्राक्षसमः कुन्ति भविष्यत्येष ते सुतः ( अर्जुनः ) ॥१॥
एष जेष्यति संग्रामे कुरून्सर्वान्समागतान् ।
भीमसेनद्वितीयश्च लोकमुद्वर्तयिष्यति ॥ २ ॥
पुत्रस्ते पृथिवीं जेता यशश्चास्य दिवं स्पृशेत् ।
पित्र्यमंशं प्रनष्टं च पुनरप्युद्धारिष्यति ॥ ३ ॥
तथा तदस्तु दाशार्ह यथा वागभ्यभाषत ।
धर्मश्चेदस्ति वार्ष्णेय तथा सत्यं भविष्यति ॥ ४ ॥

म. भा. उद्योगपर्व अ. १३७.

तिष्ठतु तावत्परस्तात्पत्रलेखागमनवृत्तान्तप्रश्नः । वैशंपायनवृत्तान्तमेव तावत्पृच्छामि । अयि, दृष्टस्त्वयाच्छोदसरसि वैशंपायनः । पृष्टो वावस्थानकारणम् । पृष्टेन वा किंचित्कथितं न वा । पश्चात्तापी वास्मत्परित्यागेन । स्मरति वास्माकम्[६] । पृष्टोऽसि वानेन किंचिन्मदीयम् । उपलब्धो वाभिप्रायः । उत्पन्नो वालापो युवयोः । मातापित्रोर्वा संदिष्टं किंचित् । प्रतिबोधितो वा त्वयागमनाय । आवेदितं वास्य मदीयमागमनम् । नापयास्यति वा तस्मात्प्रदेशात् । दास्यति वा दर्शनम् । ग्रहीष्यति वास्मदनुनयम् । आगमिष्यति वा पुनर्मया सह । किं कुर्वन्दिवसमास्ते । को वा विनोदोऽस्य तिष्ठत इति । कादंबरी.

युवराज किं न जितं देवेन महाराजाधिराजेन तारापीडेन यज्जेष्यसि । का दिशो न वशीकृता या वशीकरिष्यसि । कानि दुर्गाणि न प्रसाधितानि यानि प्रसाधयिष्यसि । कानि द्वीपांतराणि नात्मीकृतानि यान्यात्मीकरिष्यसि । कानि रत्नानि नोपार्जितानि यान्युपार्जयिष्यसि । के वा न प्रणता राजानः, कैर्न विरचितः शिरसि

---

५. बहुव्रीहि. ६. § ३१८ ( १३ ). ७. § ३१८ ( १६ ) ८. § ३१४ ( २ ).

बालकमलकुड्मलकोमलः सेवांजलिः, कैर्न मसृणीकृताः प्रतिबद्ध-हेमपट्टैर्ललाटैः सभाभुवः, कैर्न घृष्टाः पादपीठे चूडामणयः, कैर्न प्रतिपन्ना वेत्रलताः, कैर्नोद्धूतानि चामराणि, कैर्नोच्चारिता जयशब्दाः, केषां न पीताः किरीटपत्रमकरैः सलिलधारा इव निर्मलास्त्वच्चरणनखमयूखराजयः। एते हि दशरथभगीरथभरतदिलीपालर्कमांधातृप्रतिमाः कुलाभिमानशालिनः सर्वपार्थिवाश्चूडामणिपल्लैवरुद्वहन्ति भवच्चरणरजःसंहतिम्।

देवा वै सोमस्य राज्ञोऽग्रपेये न समपादयन्। अहं प्रथमः पिबेयमहं प्रथमः पिबेयमित्येवाकामयन्त। ते संपादयन्तोऽब्रुवन्, हन्ताजिमयाम स यो न उज्जेष्यति स प्रथमः सोमस्य पास्यतीति। तथेति। त आजिमयुः। तेषामाजिं यतामभिसृष्टानां वायुर्मुखं प्रथमः प्रत्यपद्यत, अथेन्द्रोऽथ मित्रावरुणावथाश्विनौ। ऐ. ब्रा. २–२५.१.

## शब्दार्थसंग्रह

अग्रपेय न. प्रथम पिण्याचा मान.
अच्छोद न. एका तलावाचें नांव.
अतिक्रान्त वि. वरचढ.
अधिराज पुं. सार्वभौम राजा.
अनुनय पुं. विनंती, सांत्वन.
अनुरूप वि. योग्य, साजेसें.
अन्तर् अ. आंत.
अन्तरिक्ष न. आकाश.
अभिसृष्ट वि. सोडलेला.
अयि अ. प्रश्नार्थी.
अर्ज् (उप) १० प. मिळवणें, संपादणें.
अवस्थान न. मार्गे राहणें.
आकुल वि. व्याप्त.
आजि पुं., स्त्री. लढाई; शर्यत.
आत्मगत आपल्यासंबंधीं
आत्मीकृ आपलेंसें करणें, ताब्यांत आणणें.
आमय पुं. रोग.
अलर्क पुं. एक राजा.
आम्नात वि. मानलेलें.
आलाप पुं. संभाषण.
आवेदित वि. कळविलेलें.
उत्तिष्ठमान वि. उत्कर्ष पावणारा.
उद्धूत वि. हलविलेलें.
उपलब्ध वि. जाणलेलें.
उपेक्ष्य वि. हयगय करण्यास योग्य.
कम् (कामय्) १ आ. प्रेम करणें, इच्छिणें.

**करणीय** वि. करण्यास योग्य; कार्य.
**किरीट** न. मुगुट.
**कुड्मल** पुं. कळी.
**क्षपणक** पुं. जैन किंवा बौद्ध भिक्षु.
**घृष्ट** वि. घासलेलें.
**चर् ( उद् )** १ प. उच्चारणें.
,, प्रयो. उच्चारणें.
**चामर** पुं. न. चौरी.
**चूडा** स्त्री. मस्तक.
**जयशब्द** पुं. जयजय-कार.
**जि ( उद् )** १ प. विजयी होणें.
**तारापीड** पुं. एका राजाचें नांव.
**तुरंगम** पुं. घोडा.
**तुल् ( तुलय् )** १० प. संशय घेणें.
**दण्ड्य** वि. शिक्षेला पात्र.
**दाशार्ह** पुं. कृष्ण.
**दिलीप** पुं. एका सूर्यवंशी राजाचें नांव.
**दिव्** स्त्री. आकाश.
**दिव्यरूप** वि. स्वर्गीय.
**दिश् ( आ )** १ उ. आज्ञा करणें.
,, **सम्** + निरोप पाठविणें.
**द्वितीय** पुं. सोबती.
**द्वीप** पुं. न. खंड.
**धा ( श्रत् )** ३ उ. विश्वास ठेवणें.
**धारा** स्त्री. धार.
**धीवर** पुं. कोळी.
**निर्विण्ण** वि. खिन्न.
**नी (प्र)** १ उ. (शिक्षा) करणें.
**पच्** १ उ. शिजविणें.
**पट्ट** पुं., नं. मुगुट.
**पत्र** न. पत्रा.
**पत्रलेखा** एका दासीचें नांव.
**पथ्य** न. कल्याण.
**पर** पुं. शत्रु.
**पद् ( सम् )** ४ आ. प्रयो. वि. एकमत होणें.
**परस्तात्** अ. दूर, बाजूस.
**परित्याग** पुं. त्याग.
**पल्लव** पुं. पालवी.
**पश्चात्तापिन्** वि. मागून दुःख पावणारा.
**पलायित** वि. पळालेला.
**पादपीठ** पुं. न. पादासन.
**पित्र्य** वि. वडिलोपार्जित.
**प्रतिपन्न** वि. धारण केलेलें; घेतलेलें.
**प्रतिबद्ध** वि. बांधलेलें.
**बुध् ( प्रति )** ४ आ. प्रयो. उपदेश करणें.
**भाष् ( अभि )** १ आ. उद्देशून बोलणें.
**भेद** पुं. फूट, भांडण.
**मदीय** वि. माझें.
**मयूख** पुं. किरण.
**मसृण** वि. गुळगुळीत, मऊ.
**यत्** वि. [इ] जाणारा.
**या ( अप )** २ प. दूर जाणें.
**युवराज** पुं. गादीवर बसणारा राजपुत्र.
**मांधातृ** पुं. एका सूर्यवंशी राजाचें नांव.
**रच् ( वि )** १० प. जुळविणें.
**रजक** पु. परीट.
**रजस्** न. धुरळा.
**राजि** स्त्री. ओळ, रांग.
**रुह् ( अधि )** १ उ. चढणें.
**ललाट** न. कपाळ.
**लोक् ( आ )** १० प.

पाहणें.
**लोचन** न. डोळा.
**वार्ष्णेय** पुं. [ वृष्णि+ एय ] कृष्ण.
**वासुदेव** पुं. कृष्ण.
**विनोद** पुं. करमणुकीचें साधन.
**वृत्** ( उद् ) १ आ.प्रयो. उध्वस्त करणें.
**वेत्रलता** स्त्री. भाल— दाराची काठी.
**शालिन्** [ शाल् १ आ. शोभणारा] शोभणारा.
**शिष्ट** वि. विद्वान्, सुसंस्कृत.
**शूल** पुं. न. लोखंडी खिळा; (वधार्थ) सूळ.
**संग्राम** पुं. लढाई.
**समागत** वि. एकत्र आलेलें.
**संहति** स्त्री. समूह.
**सहस्राक्ष** पुं. इन्द्र.
**साध्** (प्र) ४, ५प. प्रयो. मिळविणें.
**सोम** पुं. सोमरस.
**हस्त** अ. आनंदार्थी.
**हृ** ( उद् ) १ उ. उद्धार करणें.
**हेमन्** न. सोनें.

## षड्विंशः पाठः

**पूर्वतयारीः**—परोक्षभूतकाळ; वस् प्रत्ययान्त शब्द. §§ १७२ ते १८०, २७७.

**जनको ह वैदेहो बहुदक्षिणेन यज्ञेनेजे। तत्र ह कुरुपञ्चालानां ब्राह्मणा अभिसमेता बभूवुः। तस्य ह जनकस्य वैदेहस्य विजिज्ञासा बभूव कःस्विदेषां ब्राह्मणानामनूचानतम इति। स ह गवा सहस्रमवरुरोध, दश दश पादा एकैकस्याः शंगयोराबद्धा बभूवुः ॥ १ ॥ तान् होवाच ब्राह्मणा भगवन्तो यो वो[1]ब्रह्मिष्ठः स एता गा उदजतातिति। ते ह ब्राह्मणा न दधृषुः। अथ ह याज्ञवल्क्यः स्वमेव ब्रह्मचारिणमुवाचैताः सोम्योदज सामश्रव इति। ता होदाचकार। ते ह ब्राह्मणाश्चुक्रुधुः कथं नो[2] ब्रह्मिष्ठो ब्रुवीतेति। अथ ह जनकस्य वैदेहस्य होताश्वलो नाम बभूव। स हैनं पप्रच्छ त्वं नु खलु नो याज्ञवल्क्य ब्रह्मिष्ठोसीति। स होवाच नमो वयं ब्रह्मिष्ठाय कुर्मो गोकामा एव वयं स्म इति। तं ह तत एव प्रष्टुं दध्रे होताश्वलः ॥ २ ॥ बृ. उ. ३.१.१-२.**

---

१. § ३१८ (६). २. § ३३०.

एष वै मृत्युर्यत्संवत्सरः। एष हि मर्त्यानामहोरात्राभ्यामायुः क्षिणोति। अथ म्रियन्ते। तस्मादेष एव मृत्युः। स यो हैतं मृत्युं संवत्सरं वेद न हास्यैष पुरा जरसोऽहोरात्राभ्यामायुः क्षिणोति। सर्वं हैवायुरेति। एष उ एवान्तकः। एष हि मर्त्यानामहोरात्राभ्यामायुषोऽन्तं गच्छति ॥ १ ॥ अथ म्रियन्ते। तस्मादेष एवान्तकः। स यो हैतमन्तकं मृत्युं संवत्सरं वेद न हास्यैष पुरा जरसोऽहोरात्राभ्यामायुषोऽन्तं गच्छति। सर्वं हैवायुरेति ॥२॥ ते देवा एतस्मादन्तकान्मृत्योः संवत्सरात्प्रजापतेर्बिभयांचक्रुर्यद्वै नोऽयमहोरात्राभ्याआयुषमन्तं न गच्छेदिति ॥३॥ त एतान्यज्ञक्रतूंस्तेनिरेऽग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुबन्धं सौम्यमध्वरम्। त एतैर्यज्ञक्रतुभिर्यजमाना नामृतत्वमानशिरे ॥ ४ ॥ ते हाप्यग्निं चिक्यिरे। तेऽपरिमिता एव परिश्रित उपदधुरपरिमिता यजुष्मतीरपरिमिता लोकंपृणा यथेदमप्येतर्ह्येके* उपदधति। इति देवा अकुर्वन्। इति ते ह नैवामृतत्वमानशिरे ॥५॥ श. ब्रा. १०४.

न तज्जलं यन्न सुचारुपंकजं, न पंकजं तद्यदलीनषट्पदम्।
न षट्पदोऽसौ न जुगुंज यः कलं, न गुंजितं तन्न जहार यन्मनः॥

रात्रिर्गमिष्यति, भविष्यति सुप्रभातं,
भास्वानुदेष्यति, हसिष्यति पङ्कजश्रीः।
इत्थं विचिन्तयति कोशगते द्विरेफे,
हा हन्त हन्त नलिनीं गज उज्जहार ॥
भूतानां प्राणिनः श्रेष्ठाः, प्राणिनां बुद्धिजीविनः।
बुद्धिमत्सु नराः श्रेष्ठा, नरेषु ब्राह्मणाः स्मृताः ॥१॥
ब्राह्मणेषु च विद्वांसो, विद्वत्सु कृतबुद्धयः।
कृतबुद्धिषु कर्तारः, कर्तृषु ब्रह्मवेदिनः ॥२॥

रत्नैर्महार्हैस्तुतुषुर्न देवाः न भेजिरे भीमविषेण भीतिम्।

---

३. § ३०५(अ). ४. § ३१८ (३). * कांहीं लोक.

सुधां विना न प्रययुर्विरामं, न निश्चितार्थाद्विरमन्ति धीराः ॥
यः परस्य विषमं विचिन्तयेत्प्राप्नुयात्स कुमतिः स्वयं हि तत् ।
पूतना हरिवधार्थमाययौ, प्राप सैव वधमात्मनस्ततः[५] ॥

दैवमविद्वांसः प्रमाणयन्ति। छंदांसि वै देवेभ्यो हव्यमूढ्वा श्रान्तानि जघनार्धे यज्ञस्य तिष्ठन्ति; यथाश्वो वाश्वतरो वोहिवांस्तिष्ठेदेवम् ।

द्वया वै देवाः । देवा अहैव देवाः। अथ ये ब्राह्मणाः शुश्रुवांसोऽनूचानास्ते मनुष्यदेवाः । तेषां द्वेधा विभक्त एव यज्ञः । आहुतय एव देवानां, दक्षिणा मनुष्यदेवानां ब्राह्मणानां शुश्रुवुषामनूचानानाम् । आहुतिभिरेव देवान्प्रीणाति । दक्षिणाभिर्मनुष्यदेवान्ब्राह्मणान्शुश्रुवुषोऽनूचानान् । त एनमुभये देवाः प्रीताः सुधायां दधति । श. ब्रा. २. २.

श्रेयांसि सर्वाण्यधिजग्मुषस्ते न किंचिदप्याशास्यं भवति ।

" तात, अद्य खलु देवस्य तारापीडस्य समाप्तविद्यमुपारूढयौवनमालोक्य भवन्तं सुचिराद्भुवनराज्यफलप्राप्तिरुपजाता । अद्य समृद्धाः सर्वा गुरुजनाशिषः । अद्यफलितमनेकजन्मातरोपात्तमवदातं कर्म । अद्य प्रसन्नाः कुलदेवताः । नह्यपुण्यभाजां भवादृशास्त्रिभुवनविस्मयजनकाः पुत्रतां प्रतिपद्यंते । क्वेदं वयः, क्वेयममानुषी शक्तिः । क्व चेदमशेषविद्याग्रहणसामर्थ्यम् । अहो धन्याः प्रजा यासां भरतभगीरथप्रतिमो भवानुत्पन्नः पालयिता । किं खलु कृतमवदातं कर्म वसुंधरया ययासि भर्ता समासादितः। सर्वथा कल्पकोटीर्महावराह इव दंष्ट्रावलयेन वह बाहुना वसुंधराभारं सह पित्रा" इत्यभिधाय च स्वयमाभरणवसनकुसुमांगरागादिभिरभ्यर्च्य विसर्जयांचकार ।                    कांदबरी.

---

५. तस्मात् (हरेः) ६. §३१६ (१०)

## शब्दार्थसंग्रह

अग्निहोत्र न. अग्निहोत्र.
अंगराग पुं. उटी, उटणें.
अज् ( उद् ) १ प. हांकून नेणें.
अध्वर पुं. यज्ञ.
अनूचान ( अनुवच्+आन ) वि. साङ्ग वेद शिकलेला.
अन्तक वि. अन्त करणारा.
अपरिमित वि. न मोजलेलें.
अभिसमेत वि. जमलेले.
अमानुष वि. अलौकिक.
अमृतत्व न. मृत्युराहित्य, अमरपणा.
अर्थ् ( अभि ) १० आ. मागणें, विनंती करणें.
अवदात वि. ( अव दै १ प. ) पवित्र, शुद्ध.
अशेष वि. सर्व.
अश्वतर पुं. खेचर.
अश्वल पुं. जनकाचा होता.
अह अं. निश्चयार्थी, अर्थात्.

अहोरात्र पुं. रात्रंदिवस.
आभरण न. अलंकार.
आशास्य इच्छिण्याजोगें.
आशिस् स्त्री.आशीर्वाद.
आहुति स्त्री. अग्नीत टाकण्याची—हवन करण्याची—वस्तु
इत्थम् अ. याप्रकारें.
उपात्त वि. संपादिलेलें.
उभय स. दोघे.
एतर्हि अ. आतां, सांप्रत.
ककुभ् स्त्री. दिशा.
कल्प पुं. ४३२ कोटी वर्षें, १४ मन्वंतरें.
कुमति वि. दुष्ट बुद्धीचा.
कुरु पु. (नि. ब.) दिल्ली प्रांत.
कृ (उदा) ८ उ. हांकून नेणें.
कृतबुद्धि वि.दृढनिश्चयी; शहाणा.
कोटी स्त्री. कोटी ( संख्या ).
कोश पुं. पुष्पाचा कळा.
क्रतु पुं. यज्ञ.

क्षि ५ प. नाश करणें.
गुंज् १ प. गुंजारव करणें.
गुंजित न. गुंजारव.
गोकाम वि. ( गाः कामयते ) गाई इच्छिणारा.
ग्रहण न. शिकणें.
चातुर्मास्य न. चार चार महिन्यांनीं करावयाचा यज्ञविशेष.
जघन पुं., न. शरीराचा मागला भाग.
जनक वि. उत्पन्न करणारा.
जनक पुं. जनक राजा.
जरस् [जरा] स्त्री. म्हातारपण.
तन् ८ उ. (यज्ञ) करणें.
तात पुं. बाळ, मुलगा.
दर्श पुं. प्रतिपदायुक्त अमावास्येची इष्टि.
द्वय वि. दोन प्रकारचा.
द्विरेफ पुं. भुंगा, भ्रमर.
द्वेधा अ. दोन प्रकारें.
धा ( उप ) ३ उ. वसविणें, ठेवणें, रचणें.
धृ ६ आ. निश्चय करणें,

मनांत आणणें.
**धृष्** १, ५ प. धजणें, समर्थ होणें.
**नलिनी** स्त्री. कमळीण.
**पंकज** न. कमळ.
**पञ्चाल** पुं. ( नि. व. ) रोहिलखंड व अंतर्वेदी हा देश.
**परिश्रित्** स्त्री. यज्ञवेदी सभोंवतीचा लहान दगड.
**पशुबन्ध** पुं. पशुयज्ञ.
**पाद** पुं. एक तोळा सोनें ( नाणें ).
**पुण्यभाज्** वि. पुण्यवान्.
**पुरा** अ. आधीं, पूर्वीं.
**पूतना** स्त्री. कंसपक्षीय एक राक्षसीण.
**पूर्णमास** पुं. पूर्णिमेची इष्टि.
**प्रजापति** पुं. प्राण्यांचा स्वामी.
**प्रतिमा** स्त्री. उपमा, सादृश्य.
**प्राणिन्** पुं. प्राणी.
**फलित** वि. सफल
**बुद्धिजीविन्** वि. बुद्धिमान्.
**ब्रह्मवेदिन्** वि. अध्यात्मज्ञान झालेला.
**ब्रह्मिष्ठ** वि. वेदपारग, धर्मिष्ठ.
**भगवन्** वि. ऐश्वर्ययुक्त, पूज्य.
**भगीरथ** पुं. एक सूर्यवंशी राजा.
**भरत** पुं. ऋषभदेवाचा ज्येष्ठ पुत्र. याच्यामुळें अजनाभवर्षांचें भरत-वर्ष नांव पडलें.
**भर्तृ** पुं. स्वामी, पति.
**भवादृश** वि. [भवत्] तुमच्यासारखा.
**मर्त्य** पुं. माणूस.
**महार्ह** वि. [ अर्ह पुं.= किंमत ] मोठ्या किंमतीचें.
**महावराह** पुं. वराहावतार.
**यज्** १ उ. यज्ञ करणें.
**यजमान** पुं. यज्ञ करणारा.
**यजुष्मती** स्त्री. यज्ञवेदी बांधावयाची एक प्रकारची वीट.
**यज्ञक्रतु** पुं. यज्ञविधि.
**यत्** अ. कीं.
**याज्ञवल्क्य** पुं. एका ऋषीचें नांव.
**रुध्** ( अव ) ७ उ. बांधून ठेवणें.
**लप्** ( आ ) १ प. संभाषण करणें.
**लोकंपृणा** स्त्री. यज्ञवेदी बांधावयाची एक प्रकारची वीट.
**वलय** पुं. न. समूह, मंडल.
**वसुंधरा** स्त्री. पृथ्वी.
**विजिज्ञासा** स्त्री. जाणण्याची इच्छा.
**विद्वस्** वि. जाणणारा; विद्वान.
**विभक्त** वि. विभागलेला.
**विराम** पुं. थांबणें.
**विषम** न. आपत्ति, दुःख.
**वैदेह** वि. विदेह देशाचा.
**शुश्रुवस्** वि. [श्रु+वस्] सुशिक्षित.
**शृंग** न. शिंग.
**श्री** स्त्री. शोभा, कान्ति.
**समासादित** वि. मिळविलेलें.
**समृद्ध** वि. सफल.
**सर्वथा** अ. सर्वप्रकारें.
**सुचारु** वि. अत्यंत सुंदर.
**सौम्य** वि. [सोम+य] सोमरसात्मक.

सृज् (वि) ६ उ. प्रयो. निरोप देणें. स्विद् अ. प्रश्नार्थी. हन्त अ. शोकार्थी. हा अ. शोकार्थी. हृ १ उ. आकर्षणें.

## सप्तविंशः पाठः

पूर्वतयारी—नामसाधितें व धातुसाधितें. प्रकरण ५वें आणि ७ वें.

अजल्पतो जानतस्ते शिरो यास्यति खण्डशः[1] ।
नानुवाकहता बुद्धिर्भवेत् सर्वत्रगामिनी ॥
समूलघातमघ्नन्तः परान्नोद्यन्ति मानिनः ।
प्रध्वंसितान्धतमसस्तत्रोदाहरणं रविः ॥
आयत्यां प्रतिकारज्ञस्तदात्वे दृढनिश्चयः ।
अतीते कार्यशेषज्ञो नरोऽर्थैर्न प्रहीयते ॥
कामक्रोधग्राहवतीं पंचेन्द्रियजलां नदीम् ।
नावं धृतिमयीं[3] कृत्वा जन्मदुर्गाणि संतर ॥
करिष्यन्न प्रभाषेत कृतान्येव तु दर्शयेत् ।
धर्मकामार्थकर्माणि, तथा मंत्रो न भिद्यते ॥
उत्थानधीरः पुरुषो वाग्धीरानधितिष्ठति ।
उत्थानवीरान्वाग्वीरा रमयन्त उपासते ॥
बृहत्सहायः कार्यान्तं क्षोदीयानपि गच्छति ।
संभूयांभोधिमभ्येति महानद्या[4] नगापगा ॥
श्रुत्वा स्पृष्ट्वा च दृष्ट्वा च भुक्त्वा घ्रात्वा च यो नरः ।
न हृष्यति ग्लायति वा स विज्ञेयो जितेन्द्रियः ॥
स्वधर्मं परमं मत्वा परस्वहरणं नृपाः ।
परस्परं महायुद्धं कृत्वा प्राणांस्त्यजन्त्यपि[5] ॥
राज्ञो यदि न पापं स्याद्दस्यूनामपि नो भवेत् ।
सर्वं पापं धर्मरूपं स्थितमाश्रयभेदतः ॥

चंद्रापीडोऽतर्द्रवन्निव दह्यमान इव स्फुटन्निव सहस्रधा दुःखेन

---

१. § १२४. तुकडे तुकडे होतील. २. § ३४४ ३. § ११६. ४. 'महानद्या संभूय' असा अन्वय. ५. 'प्राणान्' शीं अन्वय.

चकार चेतसि । अहो मे रम्योऽप्यरमणीयः संवृत्तो जीवलोकः । वसन्त्यपि शून्यीभूता पृथिवी । सचक्षुषोऽप्यंधाः ककुभो जाताः । सुनिष्पन्नमपि हतं जन्म । सुरक्षितमपि मुषितं जीवितफलम् । कं (परं) पश्यामि । कमालपामि । कस्मै विश्रम्भं कथयामि । केन सह सुखमासे । किमद्यापि मे जीवितेन कादंबर्यापि[1] च । वैशंपायनस्य कृते क्व कं पृच्छामि, कमभ्यर्थये, को मे ददातु पुनस्तादृशं मित्ररत्नम्[2] । कथं मया तातस्य शुकनासस्य चात्मा वैशंपायनेन विना दर्शयितव्यः । किमभिधाय च तनयशोकविह्वलाम्बा मनोरमा वा संस्थापयितव्या । किं भूमिः काचिदसिद्धा तां साधयितुं पश्चात्स्थितः । उत नरपतिः कश्चिदसंघटितस्तत्संघटनाय पश्चात्परिलम्बितः । आहोस्वित्काचिद्विद्या अगृहीता तां ग्रहीतुं मयोत्संकलितः[3] इत्येतानि चान्तरात्मना चिरमधोमुख एव विकल्प्यापराधिनमिवात्मानं मन्यमानो वदनमदर्शयञ् शनैः शनैः कृच्छ्रादिव तान् पप्रच्छ । कादंबरी.

## शब्दार्थसंग्रह

अतीत न. भूत-गत काळ.

अद्यापि अ. अजून.

अनुवाक पुं. पाठ करणें, घोकणें, घोकंपट्टी.

अन्तरात्मन् पुं. अंतःकरण, मन.

अन्धतमस न. [अन्ध+तमस्] दाट अंधार.

अपराधिन् वि. अपराधी

अंबा स्त्री. आई.

अंभोधि पुं. समुद्र.

असिद्ध वि. हस्तगत न केलेलें.

आयाति स्त्री. भविष्य-पुढील काळ.

आस् (उप) २ आ. सेवा करणें.

आहोस्वित् अ. किंवा.

इ (अभि) २ प. जवळ-कडे-जाणें.

,, उद्–वर जाणें, उगवणें, पुढें जाणें, चालणें.

इव अ. जणूं काय.

उत अ. किंवा.

उत्थान न. पराक्रम; पौरुष.

उत्संकलित वि. दूरीभूत.

ककुभ् स्त्री दिशा.

क्लृप् (वि) १ आ. संशय घेणें.

क्षोदीयस् वि. [क्षुद्र+

---

१. § ३१५ (७). २. § ३३८ (ई). ३. § ३१५ (७).

ईयस् ] फार क्षुद्र, लहान.
खण्ड पुं., न. तुकडा.
घट् (सम्) १ आ. एकी करणें.
ग्राह पुं. सुसर.
चंद्रापीड पुं तारापीड राजाचा पुत्र.
चेतासि कृ विचार– करणें, मनांत आणणें.
जन्मन् न. आयुष्य.
जीवलोक पुं. मृत्यु-लोक.
तदात्व न. वर्तमान– चालू काळ.
दस्यु पुं. चोर.
द्रु १ प विरघळणें.
धीर वि. स्थिर, धिमा.
धृति स्त्री. धैर्य.
नग पुं. [न गच्छति ] पर्वत, डोंगर.
नगापगा स्त्री. ओहोळ.
नो अ. नाहीं.
परस्व न. दुसऱ्याचें वित्त.
पश्चात् अ. पाठीमागें.
बृहत् वि. मोठा.
भिद् ७ उ. फोडणें; उघड करणें.
भू ( सम् ) १ प. एकत्र होणें; मिळणें.
मनोरमा स्त्री. शुक-नासाची पत्नी.
मंत्र पुं. बेत, मसलत.
मानिन् वि. मानी.
मुषित वि. चोरलेलें.
लप् ( आ ) १ प. संभाषण करणें.
लंब् ( परि ) १ आ. विलंब करणें.
वसन्ती [ वस् – अत् ] वि. स्त्री. लोकांनीं गजबजलेली.
विश्रम्भ पुं. गुप्त गोष्ट, गुह्य.
विह्वल वि. व्याकुल, दुःखित.
वृत् [ सम् ] १ आ. होणें.
वैशंपायन पुं. शुकनासाचा पुत्र.
शुकनास वि. ना. तारापीड राजाचा प्रधान.
शून्य वि. ओसाड, निर्जन.
संघटन न. एकी करणें.
साध् ४,५ प. प्रयो. हस्तगत करणें.
स्था [सम्] १ प. प्रयो. सांत्वन-समाधान करणें
,, अधि+पुढारी होणें; प्रभुत्व चालविणें.
स्फुट् ६ प. फुटणें.
हत वि. नष्ट.

## अष्टाविंशः पाठः

**पूर्वतयारी**–अञ्च् धात्वन्त शब्द § ७९ व §§ ५१, ४९, ७८ यांतील अनियमित शब्द.

**देवासुरा वा एषु लोकेषु समयतन्त । तत एतस्यां प्राच्यां दिश्ययतन्त । तांस्ततोऽसुरा अजयंस्ते दक्षिणस्यां दिश्ययतन्त । तांस्ततोऽसुरा अजयंस्ते प्रतीच्यां दिश्ययतन्त । तांस्ततोऽसुरा अजयंस्ते उदीच्यां दिश्ययतन्त । तांस्ततोऽसुरा अजंयस्ते उदी-**

च्यांप्राच्यां दिश्ययतन्त । ते ततो न पराजयन्त सैषा दिगपरा-
जिता । ऐ. ब्रा. १.१४.

इन्द्रियं वा एतदस्मिँल्लोके यद्दधि । यद्दध्नाभिषिंचति इन्द्रियमेवास्मिंस्तद्दधाति । रसो वा एष ओषधिवनस्पतिषु यन्मधु । यन्मंध्वाभिषिंचति रसमेवास्मिंस्तद्दधाति । तेजो वा एतत्पशूनां यद् घृतं । यद् घृतेनाभिषिंचति तेज एवास्मिंस्तद्दधाति । अमृतं वा एतदस्मिँल्लोके यदापः । यदद्भिरभिषिंचति अमृतत्वमेवास्मिंस्तद्दधाति । ऐ. ब्रा. ८. २०.

स वा एष पशुरेवालभ्यते यत्पुरोळा (डा) शः । तस्य यानि किंशारूणि तानि रोमाणि, ये तुषाः सा त्वग्, ये फलीकरणास्तदसृग्, यत्पिष्टं किक्नसास्तन्मांसं यत्किंचित् कंसारं तदस्थि । सर्वेषां वा एष पशूनां मेधेन यजते यः पुरोळा (डा) शेन यजते । ऐ. ब्रा. २. ९.

असुर्या नाम ते लोका अन्धेन तमसा वृताः ।
तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः ॥
यान्ति न्यायप्रवृत्तस्य तिर्यञ्चोऽपि सहायताम् ।
अपन्थानं तु गच्छन्तं सोदरोऽपि विमुञ्चति ॥
योजनानां शतं गन्ता चैकेनाह्नाश्व उत्तमः ।
मूल्यं तस्य सुवर्णानां श्रेष्ठं पञ्च शतानि च ॥ शु. नी.
पत्यौ जीवति यः स्त्रीभिरलङ्कारो धृतो भवेत् ।
न तं भजेरन् दायादा भजमानाः पतन्ति वै ॥ शु. नी.
एवं स्वपन्ति ते भीरु शेतेऽयं कीचको यथा ।
यस्त्वामभ्यहनद्भद्रे पदा भूमौ निपात्य च । म. भा.
गृहमध्ये हस्तमितं खात्वा परिपूरितं पुनः श्वभ्रम् ।
यद्यूनमनिष्टं तत्, समे समं, धन्यमधिकं यत् ॥ १ ॥

---

१. वैदिकरूप = मधुना.

**श्वभ्रमथवाम्बुपूर्णं पदशतमित्वागतस्य यदि नोनम् ।**
**तद्धन्यं, [1]यच्च भवेत्पलान्यपामाढकं चतुःषष्टिः ॥ २ ॥**

बृहत्संहिता—वास्तुविद्या.

## शब्दार्थसंग्रह

**अनिष्ट** वि. अकल्याणकारक.
**अन्ध** वि. गडद, दाट.
**अपथिन्** पुं. दुर्मार्ग.
**अपराजिता** स्त्री. अजिंक्य, ईशान्य.
**असुर्य** वि. असुरांचा.
**अहन्** न. दिवस.
**आत्महन्** वि. आत्म्याचा तिरस्कार करणारा.
**आढक** पुं. पायली(माप)
**इन्द्रिय** न. इंद्रियाची तीक्ष्णता, तिखटपणा.
**उदीची** स्त्री. उत्तर दिशा.
**उदीचीप्राची** स्त्री. ईशान्य दिशा.
**ऊन** वि. उणें, कमी
**कंसार** न. मधला कठिण भाग.
**किक्नस** पुं. कण, रवा.
**किशारु** पुं., न. कुसळ.
**कीचक** वि. ना. विराट राजाचा मेहुणा.
**जि (परा)** १ आ. पराभव होणें करणें.
**ततस्** अ. नंतर; तेथें.
**तिर्यच्** पुं.,न. मनुष्येतर-पशु पक्षी इ. प्राणी.
**तुष** पुं. भरडकोंडा.
**त्वच्** स्त्री. कातडी.
**दक्षिणा** स्त्री. दक्षिण दिशा.
**दायाद** पुं. (दायं आदत्ते) दाईज, भाऊबंद.
**धन्य** वि. कल्याणकारक.
**न्यायप्रवृत्त** वि. न्यायानें चालणारा.
**पत्** १ प. भ्रष्ट होणें, पाप लागणें.
**परिपूरित** वि. बुजविलेलें
**पल** न. चार कर्ष वजन (माप);(कर्ष=१६मासे)
**पिष्ट** न. पीठ.
**पुरोळा(डा)श** पुं. भाजलेलें पीठ आहुतिद्रव्य.
**प्रतीची** स्त्री. पश्चिम दिशा.
**प्राची** स्त्री. पूर्व दिशा.
**प्रेत्य** अ. [प्र+इ २प.] मेल्यावर.
**फलीकरण** पुं. न. कांडकोंडा.
**भज्** १ उ. घेणें, स्वीकारणें.
**भद्रा** स्त्री. भली (स्त्री).
**मुच् (वि)** ६ प. त्याग करणें.
**मेध** पुं. आहुति.
**यज्** १ उ. यज्ञ करणें.
**यत् (वे.)** १ आ. लढणें, भांडणें.
**यत् (सम्)** लढणें.
**यत्किंचित्** स. जें कांहीं, सर्व.
**मित** [मा+त] वि. प्रमाणाचें.
**योजन** न. चार कोस

---

१. ' तदपि धन्यं ' अध्याहृत; यच्च (मृदां) आढकं अपां चतुःषष्टिः पलानि (तोलनेन) भवेत् तदपि धन्यं ' अस अन्वय.

अंतर. (यज्ञांत) ठार मारणें सुवर्ण न. सोन्याचें नाणें.
रस पुं. जोम. श्रेष्ठ वि. सर्वांत जास्त. सोदर पुं. सख्खा भाऊ.
रोमन् न. अंगावरचा केंस. श्वभ्र न. खड्डा. हस्त पुं. हात=२४ अं-
लभ् (आ) १ आ. सम वि. सारखा, सपाट. गुळें लांबीचें माप.

## एकोनत्रिंशः पाठः

पूर्वतयारी—सामान्यभूतकाळ §§ १९३ ते २१२.

अभूत्संपादितस्वादुफलो मे मनोरथः । अध्ययनपरायणतया भवान्महान्तमपि कालमतिक्रान्तं नाज्ञासीत् । नगरोपकण्ठे परिभ्रममन्नहं ह्यः कमपि दारकं रुदन्तमद्राक्षम् । आदाय चैनमुपजातकरुणो मम पित्रोः संनिधिमनैषम् । अप्राक्षां च मां पितरौ कुत्र त्वया समासादितोऽयं शिशुरिति । शिवालयात्प्रतिनिवर्तमानेन मयायमदर्शि इति प्रत्यवादिषम् ।

यदह्ना पापमकार्षम् मनसा वाचा हस्ताभ्याम् पद्भ्यामुदरेण शिस्ना[१] अहस्तदवलुम्पतु । यत्किंच दुरितं मयि इदमहं माममृतयोनौ सत्ये ज्योतिषि जुहोमि स्वाहा ॥

प्रत्यासन्नपतनतां कूलस्यालक्ष्य कूलं पिपातिषतीत्यचेतनेऽपि कूले चेतनवदुपचारो दृष्टः । जैवातृकः स्यादायुष्मानित्यमरः ।

अधिगतपरमार्थान्पण्डितान्मावमंस्थाः
तृणमिव लघुलक्ष्मीर्नैव तान्संरुणद्धि ।
अभिनवमदलेखाश्यामगण्डस्थलानां
न भवति बिसतन्तुर्वारणं[२] वारणानाम् ॥

यद्यपि बहु नाधीषे तथापि पठ पुत्र व्याकरणम् ।
स्वजनः श्वजनो मा भूत्, सकलं शकलं, सकृच्छकृत् ॥

कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।
मा कर्मफलहेतुर्भूर्मा ते संगोऽस्त्वकर्मणि ॥

---

१. वैदिकरूप=शिस्नेनं. २. § ३०५ (अ).

एषोऽस्मि पर्यटन्नेकदा गतो विदेहेषु । मिथिलामप्रविश्यैव बहिः काचिन्मठिकायां विश्रमितुमेत्य कयापि वृद्धतापस्या दत्तपाद्यः क्षणमलिन्दभूमाववास्थिषि । तस्यास्तु मद्दर्शनादेव किमप्याबद्धधारमश्रु प्रावर्तत । 'किमेतदम्ब'*, कथय कारणम्'। इति पृष्टा सकरुणमाचष्ट 'जैवातृक, ननु श्रूयते पतिरस्या मिथिलायाः प्रहारवर्मा नामासीत् । तस्य खलु मगधराजो राजहंसः परं मित्रमासीत् । तयोश्च वल्लभे वसुमतीप्रियंवदे सख्यमप्रतिमगधत्ताम् । अथ प्रथमगर्भाभिनन्दितां तां च प्रियसखीं दिदृक्षुः प्रियंवदा वसुमतीं सह भर्त्रा पुष्पपुरमगमत् । तस्मिन्नेव च समये मालवेन मगधराजस्य महज्जन्यमजनि । तत्र लेशतोऽपि दुर्लक्षां गतिमगमन्मगधराजः । मैथिलेन्द्रस्तु मालवेन्द्रप्रयत्नप्राणितः स्वविषयं प्रतिनिवृत्तो ज्येष्ठस्य संहारवर्मणः सुतैरभिव्याप्तं राज्यमाकर्ण्य स्वस्रीयात्सुह्मपतेर्दण्डावयवमादित्सुरटवीपथमवगाह्य लुब्धकलुप्तसर्वस्वोऽभूत् । तत्सुतेन च कनीयसा हस्तवर्तिना सहैकाकिनी वनचरभयपलायिता वनमगाहिषि । तत्र च मे शार्दूलनखावलीढपतितायाः पाणिभ्रष्टः स बालकः कस्यापि कपिलाशवस्य क्रोडमभ्यलीयत । तच्छवाकर्षिणश्च व्याघ्रस्यासूनिषुरिष्वसनयन्त्रमुक्तः क्षणादलिक्षत् । भिल्लदारकैः स बालोऽपाहारि । सा त्वहं मोहसुप्ता केनापि गोपालेनोपनीय स्वं कुटीरमावेश्य कृपयोपक्रान्तव्रणा स्वस्थीभूय भर्तुरन्तिकमुपतिष्ठासुरसहायतया यावद्व्याकुलीभवामि तावन्ममैकदुहिता सह यूना केनापि तमेवोद्देशमागमत् । सा भृशं रुरोद । रुदितान्ते च सार्थघाते स्वहस्तगतस्य राजपुत्रस्य किरातभर्तृहस्तगमनमात्मनश्च केनापि वनचरेण व्रणविरोपणं स्वस्थायाश्च पुनस्तेनोपयन्तुं चिन्तितताया निकृष्टजातिसंसर्गवैक्लव्यात्प्रत्याख्यानपारुष्यं तदक्षमेण चामुना विपिने स्वशिरःकर्तनोद्यममनेन यूना यदृच्छया दृष्टेन तस्य दुरात्मनो हननमात्मनश्चोपयमनमित्यकथयत् । स तु पृष्टो मैथिलेन्द्रस्यैव

---

२. § ३४३ (आ). * 'अम्बा'चें संबोधन.

कोऽपि सेवकः कारणविलम्बी तन्मार्गानुसारी जातः। सह तेन भर्तुरन्तिकमुपसृत्य पुत्रवृत्तान्तेन श्रोत्रमस्य देव्याः प्रियंवदायाश्चादहाव। स च राजा दिष्टदोषाज्ज्येष्ठपुत्रैश्चिरं विगृह्य पुनरसहिष्णुतयातिमात्रं प्रयुध्य बद्धः, देवी च बन्धनं गमिता। दग्धा पुनरहमस्मिन्नपि वार्धके हतजीवितमपारयन्ती हातुं प्रव्रज्यां किलाग्रहीषम्। दुहिता तु मम हतजीविताकृष्टा विकटवर्ममहादेवीं कल्पसुंदरीं किलाशिश्रियत्। तौ चेद्राजपुत्रौ निरुपद्रवावेवावर्धिष्येतामियता कालेन तवेमां वयोऽवस्थामस्प्रक्ष्येताम्। तयोश्च सतोर्न दायादा नरेन्द्रस्य प्रसह्यकारिणो भवेयुरिति प्रमन्युरभिरुरोद। दशकुमारचरितं ( उच्छ्वास ३ ).

## शब्दार्थसंग्रह

अकर्मन् न. कर्म न करणें.
अक्षम वि. सहन न करणारा.
अचेतन वि. निर्जीव.
अटवी स्त्री. अरण्य.
अतिक्रान्त वि. [अति+ क्रम्] निघून गेलेला.
अतिमात्रम् अ. अतिशय.
अन्तिक न. सांनिध्य.
अप्रतिम वि. अनुपम, विलक्षण.
अभिनव वि. ताजें, नवीन.
अभिव्याप्त वि. सर्व बाजूंनीं व्यापलेलें.
अमृतयोनिः अमृताचें उत्पत्तिस्थान.
अलिन्द पुं. ओटा.
अवलीढ वि. [लिह्+त] ओरखडलेलें.
अश्रु न. आसूं, अश्रु.
असहिष्णुता स्त्री. सहन न करणें.
असु पुं. ( नि. ब. ) प्राण.
आकृष्ट वि. आकर्षिलेला.
आदित्सु वि. [ आ + दा चें इच्छार्थक+उ]
आबद्ध वि. बांधलेलें.
इयत् वि. एवढें, इतकें.
इष्वसन न. [ इषवः अस्यन्ते अनेन ] धनुष्य.
उद्देश पु. स्थान, जागा.
उपकण्ठ न. जवळचा भाग.
उपक्रांत वि. वरा केलेला.
उपचार पुं. लाक्षणिक प्रयोग.
उपतिष्ठासु वि. [उप+ स्था चें इच्छार्थक+उ]
उपयमन न. विवाह.
एक स. एकटा, एकुलता.
कपिला स्त्री. पिंगट गाय.
करुणा स्त्री. दया.

---

१. ज्येष्ठभ्रातुः पुत्रैः. २. दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिः इत्यमरः।

कर्ण् ( आ ) १० प. ऐकणें.
कर्तन न. कापणें.
किरात पुं. भिल्ल.
किल अ. असमाधानार्थी.
कुटीर न. झोंपडी.
कूल न. तीर.
गण्ड पुं. गाल.
गति स्त्री. अवस्था.
गाह् १ अ. शिरणें.
,, अव ,,
गोपाल पुं. गुराखी.
ग्रह् (वि) ९ उ. लढणें.
घात पुं. नाश.
चेतन वि. सजीव.
जन पुं. समूह.
जन्य न. युद्ध.
ज्येष्ठ पुं. वडील भाऊ.
जैवातृक वि. दीर्घायुषी.
ज्योतिस् न. तेज.
तापसी स्त्री. तपस्विनी.
दग्ध वि. निंद्य, अभागी.
दण्ड पुं. न. सैन्य.
दण्डावयव पुं. सैन्याचा भाग.
दवीयस् वि. [ दूर+ ईयस् ] फार दूर.
दिदृक्षु वि. पाहूं–भेटूं इच्छिणारा.
दुरात्मन् वि. दुष्ट.
दुरित न. पाप.
दिष्ट न. नशीब.
दुर्लक्ष वि. पाहण्यास दुःखदायक.
देवी स्त्री. राणी.
दोष पुं. अनिष्ट परिणाम.
नन्द् ( अभि ) १ प. आनंद मानणें.
निकृष्ट वि. अगदीं खालचें.
नी (उप) उ. जवळ नेणें.
पति पुं. धनी; राजा.
परमार्थ पुं. श्रेष्ठ तत्त्व; अध्यात्मज्ञान.
परायण वि. ( परं अयनं यस्य सः ) तत्पर, मग्न.
पाद्य न. पाय धुण्याचें पाणी.
पार् १० प. समर्थ असणें.
पारुष्य न. कठोरपणा.
प्रत्याख्यान न. झिडकारणें.
प्रत्यासन्न वि. अतिसमीप.
प्रमन्यु शोकाकुल.
प्रव्रज्या स्त्री. संन्यास.
प्रसह्यकारिन् वि. जुलूम–जबरदस्ती करणारा.
प्राणित वि. ( प्रयो. ) जगविलेला, वांचविलेला.
बंधन न. कैद, अटकाव.
भर्तृ पुं. स्वामी, धनी.
भिल्ल पुं. भिल्ल.
भ्रष्ट वि. पडलेला.
मगध पुं. एका प्रांताचें नांव.
मठिका स्त्री. लहान मठ.
मद पुं. हत्तीच्या गंडस्थळांतून वाहणारें पाणी.
मालव पुं. माळवा.
मुक्त वि. [ मुच् ] फेंकलेला.
मोह पुं. मूर्च्छा.
यदृच्छा स्त्री. आकस्मिक गोष्ट प्रसंग.
यम् ( उप ) १ आ. विवाह करणें.
युध् ( प्र ) ४ आ. निकरानें लढणें.
रुद् ( अभि ) २ प. मोठ्यानें रडणें.
रुदित न. रडणें.
रुध् ( सम् ) ७ उ. बांधणें.

**लघु** वि. क्षुद्र.
**लिह्** २ उ. भक्षणें, खाणें.
,, अव + स्पर्शणें, चाटून–घासून जाणें.
**ली** ( अभि ) ४ आ. आंत–आड लपणें.
**लुब्धक** पुं. पारधी.
**लेखा** स्त्री. रेघ, ओळ.
**लेशतस्** अ. अल्पांशानें.
**वद्** (प्रति) १ प. उत्तर देणें.
**वनचर** पुं. भिल्ल.
**वल्लभा** स्त्री. पत्नी.
**वारण** पुं. हत्ती.
**वारण** न. प्रतिबंध.
**वार्द्धक** न. वृद्धपणा.
**विदेह** पुं. एका देशाचें नांव, तिरहूट.
**विपिन** न. अरण्य.
**विरोपण** न. ( जखम ) बरी करणें.
**विलंबिन्** वि. विलंब करणारा.
**विविक्त** वि. निर्जन, ओसाड.
**विश्** ( आ ) ६ प. प्रयो. आंत नेणें.
**विषय** पुं. देश.
**वृत्** (प्र) १ आ. सुरू होणें.
**वैक्लव्य** न. व्याकुळता, दुःख.
**व्याकुल** वि. व्याकूळ; गोंधळून गेलेला.
**शकल** पुं., न. तुकडा.
**शकृत्** न. विष्ठा.
**शव** पुं. न. प्रेत.
**शार्दूल** पुं. वाघ.
**शिवालय** पुं. शंकराचें देऊळ.
**शिश्न** पुं., न. पुरुषाचें जननेंद्रिय.
**श्याम** वि. काळा सांवळा.
**श्रम्** (वि) ४ प. विश्रान्ति घेणें.
**श्रोत्र** न. कान.
**सकल** वि. सगळें.
**सकृत्** अ. एकदां.
**सत्** वि. [ अस् २ प.] असणारा.
**संनिधि** पुं. सांनिध्य.
**सर्वस्व** न. सर्व संपत्ति.
**सार्थ** पुं. समूह; तांडा; व्यापाऱ्यांचा समूह.
**सुह्म** पुं. एका देशाचें नांव.
**सृ** (उप) १ प. जवळ जाणें
,, अनु + मागून जाणें.
**स्वस्थ** वि. रोगमुक्त.
**स्वस्रीय** पुं. बहिणीचा मुलगा, भाचा.
**हत** वि. भिकार, करंटें.
**हनन** न. मारणें.

## त्रिंशः पाठः

**पूर्वतयारी**—इच्छार्थक, पौनःपुन्यार्थक, प्रयोजक धातु व नामधातु; आशीर्वादार्थ, §§ २१३ ते २६९.

**बुभुक्षितः किं न करोति पापम् । अलब्धं चैव लिप्सेत, लब्धं रक्षेदवक्षयात् । भृशं दोधूयमानस्य गाण्डीवस्य निःस्वनः पांडवारीणां हृदयानि व्यदारयत् । पायात्स युष्मांस्त्रिभुवनस्य नाथः ।**

---

१. § ३३९.

विधेयासुर्दैवाः परमरमणीयां परिणतिम्। चिरं जीव्यात् तव पुत्रः। जाज्वल्यमानः कोपेन पिता मे न किंचिदपि मल्लप्स्यसे इति मामभ्यभाषत। कुर्वन्नेवेह कर्माणि जिजीविषेत् शतं समाः।

वह्निस्तस्य जलायते जलनिधिः कुल्यायते तत्क्षणात्।
मेरुः स्वल्पशिलायते मृगपतिः सद्यः कुरुंगायते॥
व्यालो माल्यगुणायते विषरसः पीयूषवर्षायते।
यस्यांगेऽखिल लोकवल्लभतमं शीलं समुन्मीलति॥
कामक्रोधानुवर्ती हि यो मोहाद्विरुरुत्सति।
गुणवन्तं च यो द्वेष्टि तमाहुः पुरुषाधमम्॥
राज्यविभजनाच्छ्रेयो न भूपानां भवेत्खलु।
अल्पीकृतं विभागेन राज्यं शत्रुर्जिघृक्षति॥ शु. नी.
आसीदभ्यधिका चास्य श्रीः श्रियं प्रमुमुक्षतः।
निर्वाणकाले दीपस्य वर्तीमिव दिधक्षतः॥
अनभ्यासेन वेदानामाचारस्य च वर्जनात्।
आलस्यादन्नदोषाच्च मृत्युर्विप्रान् जिघांसति॥
मयूखैर्जगतः सारं ग्रीष्मे पेपीयते रविः।
स्वादु शीतं द्रवं स्निग्धमन्नपानं तदा हितम्॥
अपनीतं सुनीतेन योऽर्थं प्रत्यानिनीषते।
मतिमास्थाय सुदृढां तदकापुरुषव्रतम्॥
तिष्ठन्ति सधनद्वारे गुणिनः किंकरा इव।
दोषा अपि गुणायन्ते, दोषायन्ते गुणा अपि॥
अलातं तिंदुकस्येव मुहूर्तमपि विज्वल।
मा तुषाग्निरिवानर्चिर्धूमायस्व जिजीविषुः॥
ऋणशेषोऽग्निशेषश्च व्याधिशेषस्तथैव च।
पुनश्च वर्धते यस्मात्तस्माच्छेषं न रक्षयेत्॥
राजन्दुधुक्षसि यदि क्षितिधेनुमेतां

---

१ 'क्रिया घडण्याच्या बेतांत आहे' या अर्थींहि इच्छार्थक प्रत्यय लागतो; तेल संपल्यावर दिवा वातहि जाळूं लागतो हें लक्षांत ध्यावें.

तेनाद्य वत्समिव लोकममुं पुषाण ।
तस्मिंश्च सम्यगनिशं परिपुष्यमाणे
नानाफलैः फलति कल्पलतेव भूमिः ॥[1]
न कार्यं भृतकः कुर्यान्नृपलेखाद्विना क्वचित् ।
नाज्ञापयेल्लेखनेन विनाल्पं वा महन्नृपः ॥ १ ॥
भ्रान्तेः पुरुषधर्मत्वाल्लेख्यं निर्णायकं परम् ।
अलेख्यमाज्ञापयति योऽलेख्यं च करोति यः ॥ २ ॥
राजकृत्यमुभौ[2] चौरौ[3] तौ भृत्यनृपती सदा ।
नृपसंचिह्नितं लेख्यं[4] नृपस्तन्न नृपो नृपः ॥ ३ ॥ शुक्रनीतिसारं.
नैव राज्ञा दरः कार्यो जातु कस्यांचिदापदि ।
अथ चेदपि दीर्णः स्यान्नैव वर्तेत दीर्णवत् ॥ १॥
दीर्णं हि दृष्ट्वा राजानं सर्वमेवानुदीर्यते ।
राष्ट्रं बलममात्याश्च पृथक् कुर्वन्ति ते मतीः ॥ २ ॥
शत्रूनेके प्रपद्यन्ते प्रजहत्यपरे पुनः ।
अन्ये तु प्रजिहीर्षन्ति ये पुरस्ताद्विमानिताः ॥ ३ ॥
य एवात्यन्तसुहृदस्त एनं पर्युपासते ।
अशक्तयः स्वस्तिकामा बद्धवत्सा इला इव ॥ ४ ॥
शोचन्तमनुशोचन्ति पतितानिव बान्धवान् ।
अपि[5] ते पूजिताः पूर्वमपि ते सुहृदो मताः ॥ ५ ॥
ये राष्ट्रमभिमन्यन्ते राज्ञो व्यसनमीयुषः ।
मा दीदरस्त्वं[6] सुहृदो मा त्वां दीर्णं प्रहासिषुः ॥ ६ ॥
प्रभावं पौरुषं बुद्धिं जिज्ञासन्त्या मया तव ।
विदधत्या समाश्वासमुक्तं तेजोविवृद्धये ॥ ७ ॥
यदेतत्संविजानासि यदि सम्यग्ब्रवीम्यहम् ।
कृत्वाऽसौम्यमिवात्मानं जयायोत्तिष्ठ संजय ॥ ८ ॥

---

१. ३४०. २. 'राजकृत्यं' शीं अन्वय. ३. 'तौ भृत्यनृपती उभौ चौरौ भवतः' असा अन्वय. ४. 'यल्लेख्यं तन्नृपः, नृपः नृपः न.' ५. = शिवाय, आणखी. द्विरुक्ति जोर येण्याकरितां. ६. § ३२३. ७. कृत्वा असौम्यं.

अस्ति नः कोशनिचयो महानविदितस्तव ।
तमहं वेद नान्यस्तमुपसंपादयामि ते ॥ ९ ॥
सन्ति नैकशता* भूयः सुहृदस्तव संजय ।
सुखदुःखसहा वीर संग्रामादनिवर्तिनः ॥ १० ॥
तादृशा हि सहाया वै पुरुषस्य बुभूषतः ।
इष्टं जिहीर्षितः किंचित्सचिवाः शत्रुकर्शन ॥ ११ ॥
तस्यास्त्वीदृशकं वाक्यं श्रुत्वापि स्वल्पचेतसः ।
तमस्त्वपागमत्तस्य सुचित्रार्थपदाक्षरम् ॥ १२ ॥

म. भा. उद्योगपर्व अ. १३७.

प्रायेणाकारणमित्राण्यतिकरुणार्द्राणि सतां चेतांसि । यतः स मां तदवस्थमालोक्य समुपजातकरुणः समीपवर्तिनमृषिकुमारकमन्यतममब्रवीत् " अयं कथमपि शुकशिशुरसंजातपक्षपुट एव तरुशिखरादस्मात्परिच्युतः । श्येनमुखपरिभ्रष्टेन वानेन भवितव्यम् । तथा हि । अतिदवीयस्तया प्रपातस्याल्पशेषजीवितोऽयमामीलितलोचनो मुहुर्मुहुर्मुखेन पतति,मुहुर्मुहुरत्युल्बणं श्वसिति, मुहुर्मुहुश्चंचुपुटं विवृणोति, न शक्नोति शिरोधरां धारयितुम् । तदेहि । यावदेवायमसुभिर्न वियुज्यते, तावदेव गृहाणेमम् । अवतारय सलिलसमीपम् । इत्यभिधाय तेन मां सरस्तीरमनाययत् । उपसृत्य च जलसमीपमेकदेशनिहितदंडकमंडलुरादाय स्वयं मां मुक्तप्रयत्नमुत्तानितमुखमंगुल्या कतिचित्सलिलबिंदूनपाययत् । कादंबरी

किमहमेतावदपि न वेद्मि, यद्गमनाय मां भवन्तः प्रबोधयन्ति । अपि चंद्रापीडेन विना क्षणमप्यहमन्यत्र न पारयामि स्थातुम् । एषैव मे गरीयसी परिबोधना । तथापि किं करोमि, अनेनैव क्षणेन सर्वत्र विगलितं मे प्रभुत्वम् । तथाहि स्मरन्निव किमपि मनो

८. ' स्वल्पचेतसः ' शीं अन्वय. * § ३४० ९. अल्पः शेषः यस्य तत् अल्पशेषं; अल्पशेषं जीवितं यस्य सः अल्पशेषजीवितः १०. § ३१५ (७). ११. §§ ३१५ (२); ३१४ (५).

नान्यत्र प्रवर्तते । पश्यन्तीव किमपि न दृष्टिरन्यतो वलति । आसक्तामिव क्वापि हृदयं किमपि न जानाति । निगडिताविव पदमपि दातुं न चरणावुत्सहेते । कीलितेव चास्मिन्नेव स्थाने तनुः ।[1] तदात्मना त्वहमसमर्थो यातुम् । अथ बलाद्भवन्तो मां निनीषवः, तत्रापि चलितस्यास्मात्प्रदेशादात्मनो जीवितधारणं न संभावयामि । अत्र तु पुनस्तिष्ठतो यदेतदंतर्हृदये किमप्यनवसीयमानं[2] विपरिवर्तते मे । येनैव विधृतोऽस्मि तेनैवावश्यं धार्यन्ते प्राणा इति चेतसि मे । तदलं निर्बन्धेन । गच्छन्तु भवन्तः । भवतु यावज्जीवमातृप्तेश्चंद्रापीडदर्शनसुखम् । अल्पपुण्यस्य तु तन्मे प्राप्तमपि करतलादेवैवमाच्छिद्य दैवेन नीतम् । कादंबरी

## शब्दार्थसंग्रह

अकारण वि. कारण-रहित; निरपेक्ष; निःस्वार्थ.
अत्यन्तम् अ. अतिशय.
अनर्चिस् वि. ज्वाळा-रहित.
अनवसीयमान वि. अंत न पावणारें.
अनिवर्तिन् वि. परत न फिरणारें.
अनिशम् अ. सतत.
अनुवर्तिन् वि. मागून जाणारें.
अन्यतम वि. पुष्कळां-पैकीं एक, कोणी तरी.
अपनीत वि. विघड-वलेलें.
अपिच अ. शिवाय, आणखी.
अभ्यधिक वि. अधिक.
अमात्य पुं. प्रधान.
अर्थ पुं. कार्य; प्राप्य वस्तु.
अलम् अ. पुरे (निषेध)
अलात न. कोलीत.
अलेख्य वि. न लिहिलेलें.
अवक्षय पुं. नाश, ऱ्हास.
आ अ. पर्यंत; थोडेसें.
आलस्य न. आळस.
आमीलित वि. थोडेसें मिटलेलें.
आस् (पर्युप) २ आ. सेवा करणें.
आसक्त वि. चिकटलेलें.
इला स्त्री. गाय.
ईयिवस् वि. गेलेला.
उत्तानित वि. पसरलेलें.
उल्वण वि. जोराचा, फार.
एकदेश पुं. भाग.
कमण्डलु पुं. कमंडलु.
कल्पलता स्त्री. इच्छा पुरविणारा देवांचा वृक्ष.
किंकर पुं. चाकर.
कीलित वि. खिळवलेलें.

---

१. 'सन्ति' अध्याहृत २. § ३१५ (९).

बांधलेलें.

**क्षिति** स्त्री. पृथ्वी.

**गम्** (अप) १ प. दूर जाणें.

**गाण्डीव** न. अर्जुनाचें धनुष्य.

**चल्** १ प. निघणें.

**चिह्नय** ना. धा. चिन्ह करणें, शिक्का मारणें.

**ज्ञा** (संवि) ९ प. चांगलें जाणणें.

,, (आ) प्रयो. आज्ञा करणें.

**ज्वल्** (वि) १ प. जोरानें पेटणें.

**तथा हि** अ.उदाहरणार्थ.

**तनु** वि. अल्प.

**तमस्** न. मोह, अज्ञान.

**तिन्दुक** पुं. टेंभुरणी.

**तु** अ. (अमक्या) विषयीं म्हणाल तर.

**तुष** पुं. भाताचा कोंडा.

**तेन** अ. तर.

**त्रिभुवन** न. स्वर्ग, मृत्यु व पाताळ.

**दण्ड** पुं. काठी.

**दर** पु. भीति

**दीर्ण** वि. भ्यालेला.

**दॄ** ९ प. भिणें.

,, **अनु** + (कर्मणि) दुसरा भ्यालेला पाहून भिणें.

**द्रव** वि. पातळ.

**धूम** पुं. धूर.

**धूमाय** ना. धा. धुमसणें.

**निगडित** वि. बांधलेलें.

**निचय** पु. ढीग; सांठा.

**निर्णायक** वि. निर्णय करणारें.

**निर्बन्ध** पुं. आग्रह.

**निर्वाण** न. विझणें.

**निःस्वन** पुं. आवाज.

**निहित** वि.(नि धा+त) ठेवलेलें.

**नी** (प्रत्या) १ उ. परत आणणें.

**नैकशत** वि. शेंकडों.

**पक्ष** पुं. पंख.

**पतित** वि. विपद्ग्रस्त.

**पद्** (प्र) ४ आ. आश्रय करणें, कडे जाणें.

,, **उपसम्** प्रयो. मिळवून देणें.

**पद** न. शब्द.

**परिच्युत** वि. पडलेला.

**परिणति** स्त्री. शेवट, परिणाम.

**परिबोधना** स्त्री. ज्ञान.

**परिभ्रष्ट** वि. पडलेला.

**पा** २ प. रक्षणें.

**पान** न. पेय.

**पुट** पुं., न. द्रोणाकृति.

**पुरस्तात्** अ. पूर्वी.

**पुष्** (परि) ४, ९ प. पोसणें, वाढविणें.

**पृथक्** अ. वेगळें.

**प्रपात** पुं. पडणें.

**प्रभाव** पुं. सामर्थ्य.

**प्रभुत्व** न. शक्ति.

**प्रयत्न** पुं. हालचाल, क्रिया.

**प्रायेण** अ. बहुतकरून.

**बुध्** (प्र) प्रयो. जागें करणें; उपदेश करणें.

**भू** १ प. भरभराट पावणें.

,, **सम्** + प्रयो. शक्य मानणें.

**भूप** पुं. राजा.

**भूयस्** अ. शिवाय, आणखी.

**भृतक** पुं. चाकर.

**भ्रान्ति** स्त्री. भ्रम होणें, चुकणें.

**मत** स्त्री.मान्य, प्रिय.

**मति** स्त्री. विचार; निश्चय.

**मन्** (अभि) ४ आ. अभिमान धरणें.

**मयूख** पुं. किरण.
**मुच्** (प्र) ६ प. टाकणें.
**यत्** अ. जर, कीं.
**युज्** (वि) कर्मणि-वियुक्त होणें.
**राजकृत्य** न. सरकारी काम.
**रुध्** (वि) ७ उ. विरोध करणें.
**लेखन** न. लिहिणें.
**लख्य** न. लेख, कागदपत्र.
**वर्जन** न. त्याग, टाकणें.
**वर्ती** स्त्री. वात.
**वल्** १ प. वळणें.
**विगलित** वि. नष्ट झालेलें.
**विदुला** वि. ना. एका तेजस्वी राणीचें नांव.
**विधृत** वि. धरून ठेवलेला.
**विभजन** न. तुकडे करणें.
**विमानित** वि. अपमान केलेला.
**विवृद्धि** स्त्री. वाढ, उत्कर्ष.
**वृत्** (विपरि) १ आ. गरगर फिरणें, घोळणें.
**व्रत** पुं. न वर्तननियम.
**शत्रुकर्शन** वि. शत्रूला पीडणारें.
**शिरोधरा** स्त्री. मान.
**शुच्** (अनु) १ प. (दुसऱ्या) बरोबर शोक करणें.
**श्येन** पुं. बहिरी ससाणा.
**श्री** स्त्री. शोभा, कान्ति.
**श्रेयस्** न. कल्याण.
**सचिव** पुं. मंत्री.
**संचिह्नित** वि. शिक्का मारलेलें.
**सञ्जय** पुं. एका राजपुत्राचें नांव. (विदुलेचा पुत्र)
**समाश्वास** पुं. धीर देणें.
**समीप** न. सांनिध्य.
**समीपवर्तिन्** वि. जवळ असणारा.
**सह्** (उद्) १ आ. समर्थ असणें.
**सार** न. पाणी.
**सु** अ. अति, फार.
**सुचित्र** वि. [सु+चित्र] उत्कृष्ट.
**सुदृढ** [ सु + दृढ ] निश्चयात्मक, बळकट.
**सुनीत** न. चांगला—योग्य उपाय किंवा मार्ग.
**सौम्य** वि. मृदु, नरम.
**स्था** (आ) १प. आश्रय करणें, धारण करणें.
**स्निग्ध** वि. तेलाचा—तुपाचा अंश असलेलें.
**स्वल्पचेतस्** वि. क्षुद्र—अत्यल्प बुद्धीचा.
**स्वस्तिकाम** वि. [स्वस्ति कामयते ] कल्याण इच्छिणारा.
**हृ** (प्र) १उ. प्रहार करणें.

---

# विविधाः पाठाः

## ३१ आहितुंडिकवेषधारिणश्चाणक्यचरस्य आकाशभाषितम्

(आकाशे) आर्य, किं त्वं भणसि–' कस्त्वम् ' इति । आर्य, अहं खलु आहितुण्डिको जीर्णविषो नाम । किं भणसि–' अहमपि अहिना खेलितुमिच्छामि ' इति । अथ कतरां पुनरार्यो वृत्तिमुपजीवति । किं भणसि–' राजकुलसेवकोऽस्मि ' इति । ननु खेलति एव आर्यो अहिना । कथमिव । अमन्त्रौषधिकुशलो व्यालग्राही, मत्तमतंगजारोही, लब्धाधिकारो जितकाशी राजसेवकः इत्येते त्रयोऽप्यवश्यं विनाशमनुभवन्ति । कथं दृष्टमात्रोऽतिक्रान्त एषः । आर्य, किं त्वं भणसि–' किमेतेषु पेटकसमुद्गकेषु ' इति । आर्य, जीविकायाः संपादकाः सर्पाः । किं भणसि–' प्रेक्षितुमिच्छामि ' इति । प्रसीदत्वार्यः अस्थानं खलु एतत् । तद्यदि कौतूहलं एहि एतस्मिन्नावासे दर्शयामि । किं भणसि–' इदं खलु भर्तुरमात्यराक्षसस्य गृहम् । नास्त्यस्मादृशानामिह प्रवेशः इति । तेन हि गच्छत्वार्यः । मम पुनर्जीविकायाः प्रसादेन अस्तीह प्रवेशः । कथमेषोऽपि अतिक्रान्तः । मुद्राराक्षसम् अं. ३.

### शब्दार्थसंग्रह

**अतिक्रान्त** वि. निघून गेलेला.
**अथ** अ. पण.
**अमात्य** पुं. प्रधान.
**अस्थान** न. अयोग्य स्थल.
**अस्मादृश** वि. आमच्यासारखा.
**आकाषभाषित** न. गैरहजर पात्राशीं संभाषण.
**आवास** पुं. [आ वस् ६ प.] घर.
**आहितुण्डिक** पुं. [अहितुण्डेन दीव्यति] गारुडी.
**कतर** स. दोहोंपैकीं कोणतें; कोणतें.
**कथमिव** अ. कसें बरें.
**चर** पुं. हेर.
**चाणक्य** वि. ना. सम्राट् चन्द्रगुप्ताचा गुरू व प्रधान.
**जित** न. जय.
**जितकाशिन्** वि. [जितेन काशते] जयानें गर्विष्ठ, जयानें मिरविणारा.

जीविका स्त्री. निर्वाहाचें साधन.
तेन हि अ. म्हणून, तर मग.
ननु अ. नाहीं काय; खात्रीनें.
पुनर् अ. तथापि, पण.
पेटक पुं., न. पेटारा.
प्रसाद पुं. कृपा.
मतंगज पुं. हत्ती.
राक्षस वि. ना. नंद-राजाचा प्रधान—चाणक्याचा प्रतिस्पर्धी.
व्यालग्राहिन् पुं. गारुडी.
सद् ( प्र ) १ प. प्रसन्न होणें; कृपा करणें.
समुद्गक पुं. करंडा, डबा.
संपादक वि. मिळवून देणारा, उत्पादक.

## ३२ राज्ञोऽष्टविधं व्रतम्

इन्द्रस्यार्कस्य वायोश्च यमस्य वरुणस्य च ।
चन्द्रस्याग्नेः पृथिव्याश्च तेजोवृत्तं[1] नृपश्चरेत् ॥ १ ॥
वार्षिकांश्चतुरो मासान्[2] यथेन्द्रोऽभिप्रवर्षति ।
तथाभिवर्षेत् स्वं राष्ट्रं कामैरिन्द्रव्रतं चरन् ॥ २ ॥
अष्टौ मासान्[3] यथादित्यस्तोयं हरति रश्मिभिः ।
तथा हरेत् करं राष्ट्रान्नित्यमर्कव्रतं हि तत् ॥ ३ ॥
प्रविश्य सर्वभूतानि यथा चरति मारुतः ।
तथा चारैः[4] प्रवेष्टव्यं व्रतमेतद्धि मारुतम् ॥ ४ ॥
यथा यमः प्रियद्वेष्यौ प्राप्ते काले नियच्छति ।
तथा राज्ञा नियन्तव्याः प्रजास्तद्धि यमव्रतम् ॥ ५ ॥
वरुणेन यथा पाशैर्बद्ध[5] एवाभिदृश्यते ।
तथा पापान्निगृह्णीयाद् व्रतमेतद्धि वारुणम् ॥ ६ ॥
परिपूर्णं यथा चन्द्रं दृष्ट्वा हृष्यन्ति[6] मानवाः ।
तथा प्रकृतयो यस्मिन् स चान्द्रव्रतिको नृपः ॥ ७ ॥

---

१. तेजसः अनुरूपं वृत्तं २. § ११५. ३. § ३१४ (२) ४. § ३१५ (२) चारद्वारेण. ५. 'बन्धयितुं इष्टः प्राणी' अध्याहृत; 'बद्ध एवाभिदृश्यते' = बांधलेलाच दिसतो—त्याला समजण्यापूर्वीच तो बांधला जातो. ६. 'दृष्टे हृष्यन्ति' अध्याहृत.

प्रतापयुक्तस्तेजस्वी नित्यं स्यात्पापकर्मसु ।
दुष्टसामन्तहिंस्रश्च तदाग्नेयं व्रतं स्मृतम् ॥ ८ ॥
यथा सर्वाणि भूतानि धरा धारयते समम् ।
तथा सर्वाणि भूतानि बिभ्रतः पार्थिवं व्रतम् ॥ ९ ॥

मनुस्मृति ९ अ.

## शब्दार्थसंग्रह

अर्क पुं. सूर्य.
आग्नेय वि. [अग्नि] अग्नीचें.
काम पुं. इच्छित वस्तु.
ग्रह् (नि) ९ उ. ताब्यांत ठेवणें, कैद करणें.
चर् १ प. आचरणें; संचार करणें.
चांद्रव्रतिक वि. चंद्राचें व्रत आचरणारा; चंद्राप्रमाणें वागणारा.
तेजस् न. वीर्य.
तोय न. पाणी.
दृश् (अभि) १ प. पाहणें.
धरा स्त्री. पृथ्वी.
परिपूर्ण वि. भरलेला, पूर्ण.
पार्थिव वि. [पृथिवी] पृथ्वीचें.
पाश पुं. फांस, दोरी.
प्रकृति स्त्री. (ब.व.) प्रजा.
प्रताप पुं. उष्णता; उग्रपणा, कडकपणा.
मारुत वि. [मारुत] वायूचें.
यम् (नि) १ प. शिक्षा करणें.
रश्मि पुं. किरण.
वरुण पुं. जलाचा अधिपति देव.
वारुण वि. [ वरुण ] वरुणाचें.
वार्षिक वि. [वर्षा] पावसाळ्याचें.
वृत्त न. वर्तनक्रम.
वृष् (अभि) १ प. वर्षाव करणें. ,, अभिप्र + ,,
समम् अ. सारखें, समान रीतीनें.
सामन्त पुं. मांडलिक.
हिंस्र वि. नाश करणारा

## ३३ शकारप्रवहणागमनम्

शकारः ( नेमिघोषमाकर्ण्य ) भाव भावे, आगतं प्रवहणम् ।

विटः कथं जानासि ।

शकारः किं न पश्यति भावः । वृद्धशूकर इव घुरघुरायमाणं लक्ष्यते ।

७. पापं कर्म येषां ते. ८. 'बिभ्रतः' चें कर्म. १. § ३३२ [गडबड].

विटः (दृष्ट्वा) साधु लक्षितं। अयमागतः।

शकारः पुत्रक[१] स्थावरक चेट, आगतोऽसि।

चेटः अथ किम्।

शकारः प्रवहणमप्यागतम्।

चेटः अथ किम्।

शकारः गावावप्यागतौ।

चेटः अथ किम्।

शकारः त्वमप्यागतः।

चेटः भट्टारक, अहमप्यागतः।

शकारः तत् प्रवेशय प्रवहणम्।

चेटः कतरेण मार्गेण।

शकारः एतेनैव प्राकारखंडेन।

चेटः भट्टारक, वृषभौ म्रियेते[२]। प्रवहणमपि भज्यते। अहमपि चेटो म्रिये।

शकारः अरे राजश्यालकोऽहम्। वृषभौ [३]मृतावपरौ क्रेष्यामि प्रवहणं [३]भग्नमपरं कारयिष्यामि। त्वं [३]मृतोऽन्यः प्रवहणवाहको भविष्यति।

चेटः सर्वमुपपन्नं भविष्यति। अहमात्मीयो न भविष्यामि।

शकारः अरे सर्वमपि नश्यतु। प्राकारखंडेन प्रवेशय प्रवहणम्

चेटः विभंग्धि रे प्रवहण। समं स्वामिना[४] विभंग्धि। अन्यत् प्रवहणं भवतु। भट्टारकं गत्वा निवेदयामि। कथं न भग्नम्। भट्टारक, एतदुपस्थितं प्रवहणम्।

शकारः न छिन्नौ[३] वृषभौ। न मृता[५]ः रज्जवः। त्वमपि न मृतः।

चेटः अथ किम्।

शकारः भाव, आगच्छ, प्रवहणं पश्यावः। त्वमपि मे गुरुः

---

१. § ११८ [३]. २. § ३२० [भविष्यार्थी]. ३. यदि भविष्यतः ४. ३१५ [७]. ५. हे विक्षिप्त वाक्यप्रयोग शकाराच्या स्वभावानुरूप आहेत.

परमगुरुः। प्रेक्ष्यसे सादरैकोऽभ्यंतरकः इति पुरस्करणीयः। इति त्वं तावत् प्रवहणमग्रतोऽधिरोह।

विटः एवं भवतु। (इत्यारोहति।)

शकारः अथवा तिष्ठ त्वम्। तव पितुः प्रवहणं येन त्वमग्रतोऽधिरोहसि? अहं प्रवहणस्वामी। अग्रतः प्रवहणमाधिरोहानि।

विटः भवानेव ब्रवीति।

शकारः यद्यप्यहमेवं भणामि तथापि तवैष आचारोऽधिरोह भट्टारक इति भणितुम्।

विटः आरोहतु भवान्।

शकारः एषं सांप्रतमाधिरोहामि। पुत्रक स्थावरक चेट परिवर्तय प्रवहणम्।

चेटः अधिरोहतु भट्टारकः

मृच्छकटिकम् अं. ८

## शब्दार्थसंग्रह

अग्रतस् अ. [ अग्र+ तस् ] पहिल्यानें, अगोदर.

अभ्यन्तरक वि. प्रेमाचा, विश्वासाचा.

आचार पुं. शिष्टाचार.

आत्मीय वि. आपला.

उपपन्न वि. योग्य.

उपस्थित वि. आलेलें.

कृ ८ उ. प्रयो. करविणें.

खण्ड पुं. तुकडा.

गो पुं. बैल.

घुरघुरायमाण वि. घरघर आवाज करणारें.

घोष पुं. आवाज.

चेट पुं. दास, सेवक.

छिन्न वि. तोडलेला, तुटलेला.

नेमि स्त्री. चाकाची धाव.

पुरस्करणीय वि. सन्मान देण्याजोगा.

प्रवहण न. गाडी.

प्राकार पुं. भिंत, तट.

भग्न वि. मोडलेलें.

भञ्ज् (वि) ७ प. मोडणें.

भट्टारक पुं. (ना०) धनी, स्वामी.

भाव पुं. (ना०) पूज्य माणूस.

रुह् (अधि) १ प. वर चढणें, बसणें.

लक्ष् १० प. पाहणें.

वाहक पुं. हांकणारा, गाडीवान.

---

५. § ११८ [३]. ६. § ३२० [भविष्यार्थी.]

विट पुं. कामुकानुचर, युवराजाचा विलासी सखा.

विद् ( नि ) २ प. प्रयो. कळविणें.

विश् ( प्र ) ६ प. प्रयो. आंत आणणें.

वृत् ( परि ) १ आ प्रयो. फिरविणें.

वृषभ पुं. बैल.

शकार (ना०) राजाच्या रखेलीचा भाऊ–हा मूर्ख गर्विष्ठ दुष्ट दर्शविलेला असतो.

श्यालक पुं. बायकोचा भाऊ, मेहुणा.

सादरक वि. आदरयुक्त.

सांप्रतम् अ. आतां.

स्थावरक वि. ना. सेवकाचें नांव.

## ३४ वृक्षसंवर्धनम्

मृद्वी भूः सर्ववृक्षाणां[1] हिता तस्यां तिलान्वपेत्।
पुष्पितांस्तांश्च मृद्नीयात् कर्मैतत् प्रथमं भुवः ॥ १ ॥
अजातशाखाञ् शिशिरे जातशाखान् हिमागमे।
वर्षागमे च सुस्कन्धान् यथादिक्[2]स्थान् प्ररोपयेत् ॥ २ ॥
घृतोशीरतिलक्षौद्रविडङ्गक्षीरगोमयैः[3]।
आमूलस्कन्धलिप्तानां संक्रामणविरोपणम्[4] ॥ ३ ॥
सायं प्रातश्च घर्मर्तौ[1], शीतकाले दिनान्तरे[2]।
वर्षासु च भुवः शोषे, सेक्तव्या रोपिता द्रुमाः ॥ ४ ॥
उत्तमं विंशतिर्हस्ता मध्यमं षोडशान्तरम्[3]।
स्थानात्स्थानान्तरं कार्यं वृक्षाणां द्वादशावरम्[3] ॥ ५ ॥
अभ्याशजातास्तरवः संस्पृशन्तः परस्परम्।
मिश्रैर्मूलैश्च न फलं सम्यग्यच्छन्ति पीडिताः ॥ ६ ॥
शीतवातातपै रोगो जायते पाण्डुपत्रता।

---

१. § ११०. २. § ३१८ ( १६ ). ३. § ११६ ( १ ). ४. § ३४९ ( २ ). १. § ३४० ( उ ). २. एक दिवसा आड. ३. 'हस्ताः' अध्याहृत.

अवृद्धिश्च प्रवालानां शाखाशोषो रसस्रुतिः ॥ ७ ॥
चिकित्सितमथैतेषां शस्त्रेणादौ विशोधनम् ।
विडङ्गघृतपङ्काक्तान् सेचयेत् क्षीरवारिणा ॥ ८ ॥
फलनाशे कुलत्थैश्च माषैर्मुद्गैस्तिलैर्यवैः ।
शृतशीतपयःसेकः फलपुष्पसमृद्धये ॥ ९ ॥

वराहमिहिर—बृहत्संहिता—वृक्षायुर्वेदाध्यायः

## शब्दार्थसंग्रह

**अक्त** वि. [अञ्ज्+त] माखलेलें, लेप दिलेलें.
**अभ्याश** पुं. सांनिध्य.
**अवर** वि. कमींत कमी, कनिष्ठ.
**उशीर** पुं., न. काळा वाळा.
**कुलत्थ** पुं. कुळीथ, हुलगे.
**क्षीर** न. दूध.
**क्षीरवारि** न. दूधमिश्रित पाणी.
**गोमय** न. गाईचें शेण.
**घर्मर्तु** पुं. [घर्म=उन्हाळा +ऋतु] उन्हाळा.
**चिकित्सित** न. औषधोपचार.
**दिन** पुं., न. दिवस.
**द्रुम** पुं. झाड.
**पत्र** न. पान.
**पाण्डु** वि. पांढरट, फिकट.
**पुष्पित** वि. फुललेलें.
**प्रवाल** पुं., न. अंकुर.
**भू** स्त्री. जमीन.
**माष** पुं. उडीद.
**मुद्ग** पु. मूग.
**मृद्** १ प. चुरडणें.
**रस** पुं. झाडांतील रस.
**रुह्** ( प्र ) १ प. प्रयो. (झाड) लावणें.
**रोपित** वि. लावलेलें.
**लिप्** ( लिम्प् ) ६ प. माखणें, लेप देणें.
**वर्षागम** पुं. ( वर्षा + आगम ) पावसाळ्याचा आरंभ.
**विडंग** पुं., न. वावडिंग.
**विरोपण** न. काढून टाकणें, (व्रण) बरा करणें.
**विशोधन** न. घाण काढून टाकणें.
**शीत** न. थंडी.
**शृत** वि. [श्रा २,४ प. + त] उकळलेलें, कढवलेलें (पाणी, दूध, तूप.)
**शोष** पुं. वाळणें.
**षोडशन्** वि. सोळा.
**संक्रामण** न. दुसऱ्या स्थानीं नेणें.
**सायम्** अ. संध्याकाळीं.
**सिच्** ६ प. प्रयो. शिंपडणें.
**सेक** पुं. शिंपडणें.
**स्कन्ध** पुं. शाखा, खांदी.
**स्थानान्तर** न. जागेचें अंतर.

स्तुति स्त्री. स्नाव. स्पर्श करणें. आगम] हिंवाळ्याचा
स्पृश् ( सम् ) ६ प. हिमागम पुं. [हिम+ आरंभ.

## शब्दार्थसंग्रह

### ३५ दुष्यन्तांगुलीयकागमवृत्तान्तः

( ततः प्रविशति नागरिकः श्यालः पश्चाद्बद्धपुरुषमादाय रक्षिणौ च )

रक्षिणौ ( ताडयित्वा ) अरे कुंभीरक, कथय कुत्र त्वयैतन्मणि-बन्धनोत्कीर्णनामधेयं राजकीयमंगुलीयकं समासादितम् ।

पुरुषः ( भीतिनाटितकेन ) प्रसीदन्तु भावमिश्राः । अहं नेदृशकर्म-कारी ।

प्रथमः किं शोभनो ब्राह्मण इति कलयित्वा राज्ञा प्रतिग्रहो दत्तः ।

पुरुषः शृणुतेदानीम् । अहं शक्रावताराभ्यन्तरवासी धीवरः ।

द्वितीयः पाटच्चर, किमस्माभिर्जातिः पृष्टा ।

श्यालः सूचक, कथयतु सर्वमनुक्रमेण । मैनमन्तरे प्रतिबन्धय ।

उभौ यदावुत्त आज्ञापयति । कथय ।

पुरुषः अहं जालोद्गालादिभिर्मत्स्यबन्धनोपायैः कुटुंबभरणं करोमि ।

श्यालः विशुद्ध इदानीमाजीवः ।

पुरुषः सहजं किल यद्विनिन्दितं न खलु तत्कर्म विवर्जनीयम् ।
पशुमारणकर्मदारुणोऽनुकम्पामृदुरेव श्रोत्रियः ॥

श्यालः ततस्ततः ।

पुरुषः एकस्मिन् दिवसे खण्डशो रोहितमत्स्यो मया कल्पितो यावत् तस्योदराभ्यन्तर इदं रत्नभासुरमंगुलीयं दृष्ट्वा पश्चादहं

---

१. § २४०. २. भगिनीपतिरावुत्तः इत्यमरः ।



तस्य विक्रयाय दर्शयन्गृहीतो भावमिश्रैः। मारयत वा मुञ्चत वा। अयमस्यागमवृत्तान्तः।

श्यालः जानुक, विस्रगंधिर्गोधादी मत्स्यबन्ध एव निःसंशयम्। अंगुलीयकदर्शनमस्य विमर्शयितव्यम्। राजकुलमेव गच्छामः।

रक्षिणौ तथा। गच्छ अरे गण्डभेदक। ( सर्वे परिक्रामन्ति )

श्यालः सूचक, इमं गोपुरद्वारेऽप्रमत्तौ प्रतिपालयतं यावदिदमंगुलीयकं यथागमनं भर्तुर्निवेद्य ततः शासनं प्रतीक्ष्य निष्क्रामामि।

उभौ प्रविशत्वावुत्तः स्वामिप्रसादाय। ( इति निष्क्रान्तः श्यालः। )

प्रथमः जानुक, चिरायते खल्वावुत्तः।

द्वितीयः नन्ववसरोपसर्पणीया राजानः।

प्रथमः जानुक, प्रस्फुरतो मम हस्तावस्य वधार्थं सुमनसः पिनद्धुम्।

पुरुषः नार्हति भावोऽकारणमारणं भावयितुम्।

द्वितीयः ( विलोक्य ) एष नो स्वामी पत्रहस्तो राजशासनं प्रतीक्ष्येतोमुखो दृश्यते। गृध्रबलिर्भविष्यसि शुनो मुखं वा द्रक्ष्यसि।

श्यालः सूचक, मुच्यतामेष जालोपजीवी। उपपन्नः खल्वंगुलीयस्यागमः।

सूचकः यथावुत्तो भणति।

द्वितीयः एष यमसदनं प्रविश्य प्रतिनिवृत्तः। ( इति पुरुषं परिमुक्तबन्धनं करोति )

पुरुषः ( श्यालं प्रणम्य ) भर्तः, अथ कीदृशो म आजीवः।

श्यालः एष भर्त्रांगुलीयकमूल्यसंमितः प्रसादोऽपि दापितः। इति पुरुषाय स्वं प्रयच्छति। )

---

३. § ३४२. ४. § ३४४. ( ई ).



पुरुषः ( सप्रणामं प्रतिगृह्य ) भर्तः, अनुगृहीतोऽस्मि ।

सूचकः एष नामानुग्रहो यच्छूलादवतार्य हस्तिस्कन्धे प्रतिष्ठापितः ।

जानुकः आवुत्त, परितोषं कथयति । तेन अंगुलीयकेन भर्तुः संमतेन भवितव्यम् ।

श्यालः न तस्मिन्महार्हं रत्नं भर्तुर्बहुमतामिति तर्कयामि । तस्य दर्शनेन भर्तुरभिमतो जनः स्मारितः मुहूर्तं प्रकृतिगंभीरोऽपि पर्युत्सुकनयन आसीत् ।

सूचकः सेवितं नामावुत्तेन ।

जानुकः ननु भण । अस्य कृते मात्स्यिकभर्तुरिति । ( इति पुरुषमसूयया पश्यति । )

पुरुषः भट्टारक, इतोऽर्धं युष्माकं सुमनोमूल्यं भवतु ।

जानुकः एतावद्युज्यते ।

श्यालः धीवर महत्तरस्त्वं प्रियवयस्यक इदानीं मे संवृत्तः । कादम्बरीसाक्षिकमस्माकं प्रथमसौहृदमिष्यते । तच्छौण्डिकापणमेव गच्छामः । ( इति निष्क्रान्ताः सर्वे । )

## शब्दार्थसंग्रह

अंगुलीय, अंगुलीयक न. आंगठी.
अथ अ. आतां.
अनुकंपा स्त्री. दया.
अनुक्रम पुं. क्रम.
अनुग्रह पुं. उपकार, कृपा.
अन्तरे अ. मध्यें.
अप्रमत्त वि. दक्ष, सावध.
अभिमत वि. प्रिय.
अभ्यन्तर न. आंतला भाग.
अवसर पुं. योग्य वेळ.
असूया स्त्री. मत्सर.
आगमन न. प्राप्ति; मिळणें.
आजीव पुं. पोटाचा धंदा.
आपण पुं. बाजार; दुकान.
आवुत्त पुं. बहिणीचा

---

४. ' अनुग्रहः ' कर्ता अध्याहृत.

## ५१ पृथोर्विनयशालित्वम्

मैत्रेय उवाच

अथ तस्य पुनर्विप्रैरपुत्रस्य महीपतेः ( वेनस्य ) ।
बाहुभ्यां मथ्यमानाभ्यां मिथुनं समपद्यत ॥ १ ॥

तद् दृष्ट्वा मिथुनं जातं ऋषयो ब्रह्मवादिनः ।
ऊचुः परमसंतुष्टा विदित्वा भगवत्कलाम् ॥ २ ॥

एष विष्णोर्भगवतः कला भुवनपालनी ।
इयं च लक्ष्म्याः संभूतिः पुरुषस्यानपायिनी ॥ ३ ॥

अयं तु प्रथमो राज्ञां पुमान् प्रथयिता यशः ।
पृथुर्नाम महाराजो भविष्यति पृथुश्रवाः ॥ ४ ॥

इयं च सुदती देवी गुणभूषणभूषणा ।
अर्चिर्नाम वरारोहा पृथुमेवानुरुंधती (भविष्यति) ॥ ५ ॥

प्रशंसंति स्म तं विप्रा, गंधर्वप्रवरा जगुः ।
मुमुचुः सुमनोधाराः सिद्धा, नृत्यान्ति स्वःस्त्रियः ॥ ६ ॥

शंखतूर्यमृदंगाद्या नेदुर्दुंदुभयो दिवि ।
तत्र सर्वे उपाजग्मुर्देवर्षिपितॄणां गणाः ॥ ७ ॥

तस्याभिषेक आरब्धो ब्राह्मणैर्ब्रह्मवादिभिः ।
आभिषेचनकान्यस्मै आजह्रुः सर्वतो जनाः ॥ ८ ॥

सोऽभिषिक्तो महाराजः सुवासाः साध्वलंकृतः ।
पत्न्यार्चिषालंकृतया विरेजेऽग्निरिवापरः ॥ ९ ॥

तस्मै जहार धनदो हैमं वीर वरासनम् ।
वरुणः सलिलस्रावं आतपत्रं शशिप्रभम् ॥ १० ॥

वायुश्च बालव्यजने, धर्मः कीर्तिमयीं स्रजम् ।
इंद्रः किरीटमुत्कृष्टं, दण्डं संयमनं यमः ॥ ११ ॥

ब्रह्मा ब्रह्ममयं वर्म, भारती हारमुत्तमम् ।
हरिः सुदर्शनं चक्रं तत्पत्न्यव्याहतां श्रियम् ॥ १२ ॥
दशचंद्रमसिं रुद्रः, शतचंद्रं तथांऽबिका ।
सोमोऽमृतमयानश्वांस्त्वष्टा रूपाश्रयं रथम् ॥ १३ ॥
अग्निराजगवं चापं, सूर्यो रश्मिमयानिषून् ।
भूः पादुके योगमय्यौ, द्यौः पुष्पावलिमन्वहम् ॥ १४ ॥
नाट्यं सुगीतं वादित्रं अंतर्धानं च खेचराः ।
ऋषयश्चाशिषः सत्याः, समुद्रः शंखमात्मजम् ॥ १५ ॥
सिंधवः पर्वता नद्यो रथवीथीर्महात्मनः ।
सूतोऽथ मागधो वंदी तं स्तोतुमुपतस्थिरे ॥ १६ ॥
स्तावकांस्तानभिप्रेत्य पृथुर्वैन्यः प्रतापवान् ।
मेघनिर्ह्रादया वाचा प्रहसन्निदमब्रवीत् ॥ १७ ॥

भो सूत, हे मागध, सौम्य बंदिन्
लोकेऽधुना स्पष्टगुणस्य मे स्यात् ।
किमाश्रयो मे स्तव एष योज्यतां
मा मय्यभूवन् वितथा गिरो वः ॥ १८ ॥

तस्मात् परोक्षेऽस्मदुपश्रुतान्यलं-करिष्यथ स्तोत्रमपीच्यवाचः ।
सत्युत्तमश्लोकगुणानुवादे जुगुप्सितं न स्तवयन्ति सभ्याः ॥१९॥
महद्गुणानात्मनि कर्तुमीशः कः स्तावकैः स्तावयतेऽसतोऽपि ।
तेऽस्याभविष्यन्निति विप्रलब्धो
जनोऽवहासं कुमतिर्न वेद ॥ २० ॥

प्रभवो ह्यात्मनः स्तोत्रं जुगुप्सन्त्यपि विश्रुताः ।
ह्रीमंतः परमोदारा पौरुषं वापि गर्हितम् ॥ २१ ॥
वयं त्वविदिता लोके सूताद्यापि वरीमभिः ।
कर्मभिः कथमात्मानं गापयिष्याम बालवत् ॥ २२ ॥

भागवते चतुर्थस्कंधे अध्यायः १५.

## ६२ लोकोक्तयः

राज्ञि धर्मिणि धर्मिष्ठाः, पापे पापाः, समे समाः ।
लोकास्तमनुवर्तन्ते, यथा राजा तथा प्रजाः ॥ १ ॥
शैले शैले न माणिक्यं, मौक्तिकं न गजे गजे ।
साधवो न हि सर्वत्र, चंदनं न वने वने ॥ २ ॥
यावज्जीवं सुखं जीवेद् ऋणं कृत्वा घृतं पिबेत् ।
भस्मीभूतस्य देहस्य पुनरावर्तनं कुतः ॥ ३ ॥
विशाखान्ता गता मेघाः, प्रसूनान्तं च यौवनम् ।
प्रणामान्तः सतां कोपो, याचनान्तं च गौरवम् ॥ ४ ॥
पठकः पाठकश्चैव ये चान्ये शास्त्रपाठकाः ।
सर्वे व्यसनिनो ज्ञेया यः क्रियावान् स पंडितः ॥ ५ ॥
गुरुशुश्रूषया विद्या पुष्कलेन धनेन वा ।
अथवा विद्यया विद्या चतुर्थी नोपलभ्यते ॥ ६ ॥
उत्तमं प्रणिपातेन, शूरं भेदेन योजयेत् ।
नीचमल्पप्रदानेन, इष्टं धर्मेण योजयेत् ॥ ७ ॥
षट्कर्णो भिद्यते मंत्रश्चतुःकर्णः स्थिरो भवेत् ।
द्विकर्णस्य तु मंत्रस्य ब्रह्माप्यन्तं न गच्छति ॥ ८ ॥
मृदोः परिभवो नित्यं, वैरं तीक्ष्णस्य नित्यशः ।
उत्सृज्य तद् द्वयं तस्मान् मध्यां वृत्तिं समाश्रयेत् ॥ ९ ॥
उपकारगृहीतेन शत्रुणा शत्रुमुद्धरेत् ।
पादलग्नं करस्थेन कंटकेनेव कंटकम् ॥ १० ॥
घटं भिंद्यात् पटं छिंद्यात् कुर्याद् रासभरोहणम् ।
येन केन प्रकारेण प्रसिद्धः पुरुषो भवेत् ॥ ११ ॥
दुर्बलस्य बलं राजा, बालानां रोदनं बलम् ।
बलं मूर्खस्य मानित्वं, चौराणामनृतं बलम् ॥ १२ ॥

न पुत्रात् परमो लाभो न संतोषात् परं सुखम् ।
न धर्मात् परमं मित्रं, नानृतात् पातकं परम् ॥ १३ ॥

अतिदानात् बलिर्बद्धो ह्यतिमानात् सुयोधनः ।
विनष्टो रावणो लौल्याद् अति सर्वत्र वर्जयेत् ॥ १४ ॥

प्रियवाक्यप्रदानेन सर्वे तुष्यन्ति जन्तवः ।
तस्मात् तदेव वक्तव्यं, वचने का दरिद्रता ॥ १५ ॥

विषादप्यमृतं ग्राह्यममेध्यादपि कांचनम् ।
नीचादप्युत्तमां विद्यां स्त्रीरत्नं दुष्कुलादपि ॥ १६ ॥

## ५३ शस्त्रास्त्रशिक्षा ।

धृतराष्ट्र व पाण्डु यांच्या मुलांना प्रथमतः कृपाचार्य शिकवीत असत. तीं मुलें एकदां विटीदांडू खेळत असतां त्यांची विटी विहिरींत पडली. ती द्रोणाचार्यांनीं मोठ्या कुशलतेनें काढून दिल्यावरून हे शस्त्रास्त्रविद्येंत अत्यंत निपुण असल्याचें आढळून आलें. तेव्हां भीष्मांनीं त्यास गुरु नेमलें. त्यांनीं त्या मुलांना सर्व प्रकारचें शिक्षण दिलें. उत्तम शिष्य होण्यास कोणते गुण लागतात व कोणतीहि विद्या किंवा कला संपादण्यास चित्ताची एकाग्रता व सतत अभ्यास हीं किती जरूर आहेत, हें ह्या वेंच्यावरून विद्यार्थ्यांनीं शिकावें.

कुमारास्त्वथ निष्क्रम्य समेता गजसाह्वयात् ।
क्रीडन्तो वीटया तत्र वीराः पर्यचरन्मुदा ॥ १ ॥

पपात कूपे सा वीटा तेषां वै क्रीडतां तदा ।
ततस्ते यत्नमातिष्ठन् वीटामुद्धर्तुमादृताः ॥ २ ॥

न च ते प्रत्यपद्यन्त कर्म वीटोपलब्धये ।
तेऽपश्यन्ब्राह्मणं श्याममापन्नं पलितं कृशम् ॥ ३ ॥

भग्नोत्साहक्रियात्मानो ब्राह्मणं पर्यवारयन् ।
अथ द्रोणः कुमारांस्तान् दृष्ट्वाऽकृत्यवतस्तदा ॥ ४ ॥

प्रहस्य मन्दं पैशल्यादभ्यभाषत वीर्यवान् ।
अहो वो धिग्बलं क्षात्रं धिगेतां वः कृतास्त्रताम् ॥ ५ ॥

भरतस्यान्वये जाता ये वीटां नाध्यगच्छथ।
वीटां च मुद्रिकां चैव ह्यहमेतदपि द्वयम् ॥ ६ ॥
उद्धरेयमिषीकाभिर्भोजनं मे प्रदीयताम्।
एषा मुष्टिरिषीकाणां मयास्त्रेणाभिमंत्रिता ॥ ७ ॥
भेत्स्यामीषीकया वीटां तामिषीकां तथान्यया।
तामन्यया समायोगे वीटाया ग्रहणं मम ॥ ८ ॥
ततो यथोक्तं द्रोणेन तत्सर्वं कृतमञ्जसा।
तदवेक्ष्य कुमारास्ते विस्मयोत्फुल्ललोचनाः ॥ ९ ॥
आश्चर्यमिदमत्यन्तमिति मत्वा वचोऽब्रुवन्।
अभिवादयामहे ब्रह्मन्नैतदन्येषु विद्यते ॥ १० ॥
कोऽसि कस्यासि जानीमो वयं किं करवामहे।
'आचक्षध्वं च भीष्माय रूपेण च गुणैश्च माम्' ॥११॥
तथेत्युक्त्वा च गत्वा च भीष्ममूचुः कुमारकाः ॥१२॥
ब्राह्मणस्य वचस्तथ्यं तच्च कर्म तथाविधम्।
अथैनमानीय तदा स्वयमेव सुसत्कृतम् ॥ १३ ॥
परिपप्रच्छ निपुणं भीष्मः शस्त्रभृतां वरः।
हेतुमागमने तच्च द्रोणः सर्वं न्यवेदयत् ॥ १४ ॥
ततः संपूजितो द्रोणो भीष्मेण द्विपदांवरः।
विशश्राम महातेजाः पूजितः कुरुवेश्मनि ॥ १५ ॥
विश्रान्तेऽथ गुरौ तस्मिन्पौत्रानादाय कौरवान्।
शिष्यत्वेन ददौ भीष्मो वसूनि विविधानि च ॥ १६ ॥
स ताञ् शिष्यान्महेष्वासः प्रतिजग्राह कौरवान्।
पाण्डवान्धार्तराष्ट्रांश्च द्रोणो मुदितमानसः ॥ १७ ॥
'कार्यं मे कांक्षितं किंचिद् हृदि संपरिवर्तते।
कृतास्त्रैस्तत्प्रदेयं मे तदेतद्वदतानघाः' ॥ १८ ॥
तच्छ्रुत्वा कौरवेयास्ते तूष्णीमासन् विशांपते।
अर्जुनस्तु ततः सर्वं प्रतिजज्ञे परंतप ॥ १९ ॥

ततोऽर्जुनं तदा मूर्ध्नि समाघ्राय पुनः पुनः ।
प्रीतपूर्वं परिष्वज्य प्ररुरोद मुदा तदा ॥ २० ॥
ततो द्रोणः पाण्डुपुत्रानस्त्राणि विविधानि च ।
ग्राहयामास दिव्यानि मानुषाणि च वीर्यवान् ॥ २१ ॥
शिक्षाभुजबलोद्योगैस्तेषु सर्वेषु पाण्डवः ।
अस्त्रविद्यानुरागाच्च विशिष्टोऽभवदर्जुनः ॥ २२ ॥
ऐन्द्रिमप्रतिमं द्रोण उपदेशेष्वमन्यत ।
एवं सर्वकुमाराणामिष्वस्त्रं प्रत्यपादयत् ॥ २३ ॥
कमण्डलुं च सर्वेषां प्रायच्छच्चिरकारणात् ।
पुत्राय च ददौ कुम्भमविलम्बनकारणात् ॥ २४ ॥
यावत्ते नोपगच्छन्ति तावदस्मै परां क्रियाम् ।
द्रोण आचष्ट पुत्राय, तत्कर्म जिष्णुरौहत ॥ २५ ॥
ततः स वारुणास्त्रेण पूरयित्वा कमण्डलुम् ।
सममाचार्यपुत्रेण गुरुमभ्येति फाल्गुनः ॥ २६ ॥
आचार्यपुत्रात् तस्मात्तु विशेषोपचयेऽपृथक् ।
न व्यहीयत मेधावी पार्थोऽप्यस्त्रविदां वरः ॥ २७ ॥
अर्जुनः परमं यत्नमातिष्ठद्गुरुपूजने ।
अस्त्रे च परमं योगं प्रियो द्रोणस्य चाभवत् ॥ २८ ॥
तं दृष्ट्वा नित्यमुद्युक्तमिष्वस्त्रं प्रति फाल्गुनम् ।
आहूय वचनं द्रोणो रहः सूदमभाषत ॥ २९ ॥
अन्धकारेऽर्जुनायान्नं न देयं ते कदाचन ।
न चाख्येयमिदं चापि मद्वाक्यं विजये त्वया ॥ ३० ॥
ततः कदाचिद् भुञ्जाने प्रववौ वायुरर्जुने ।
तेन तत्र प्रदीपः स दीप्यमानो विलोपितः ॥ ३१ ॥
भुङ्क्त एव तु कौन्तेयो नास्यादन्यत्र वर्तते ।
हस्तस्तेजस्विनस्तस्य अनुग्रहणकारणात् ॥ ३२ ॥

तदभ्यासकृतं मत्वा रात्रावपि स पाण्डवः ।
योग्यां चक्रे महाबाहुर्धनुषा पाण्डुनंदनः ॥ ३३ ॥
तस्य ज्यातलनिर्घोषं द्रोणः शुश्राव भारत ।
उपेत्य चैनमुत्थाय परिष्वज्येदमब्रवीत् ॥ ३४ ॥
प्रयतिष्ये तथा कर्तुं यथा नान्यो धनुर्धरः ।
त्वत्समो भविता लोके सत्यमेतद्ब्रवीमि ते ॥ ३५ ॥
ततो द्रोणोऽर्जुनं भूयो हयेषु च गजेषु च ।
रथेषु भूमावपि च रणशिक्षामशिक्षयत् ॥ ३६ ॥
गदायुद्धेऽसिचर्यायां तोमरप्रासशक्तिषु ।
द्रोणः संकीर्णयुद्धे च शिक्षयामास कौरवान् ॥ ३७ ॥
तस्य तत्कौशलं श्रुत्वा धनुर्वेदजिघृक्षवः ।
राजानो राजपुत्राश्च समाजग्मुः सहस्रशः ॥ ३८ ॥
तांस्तु सर्वान् समानीय सर्वविद्यास्त्रशिक्षितान् ।
द्रोणः प्रहरणज्ञाने जिज्ञासुः पुरुषर्षभः ॥ ३९ ॥
कृत्रिमं भासमारोप्य वृक्षाग्रे शिल्पिभिः कृतम् ।
अविज्ञातं कुमाराणां लक्ष्यभूतमुपादिशत् ॥ ४० ॥
शीघ्रं भवन्तः सर्वेऽपि धनूंष्यादाय सर्वशः ।
भासमेतं समुद्दिश्य तिष्ठध्वं संधितेषवः ॥ ४१ ॥
मद्वाक्यसमकालं तु शिरोऽस्य विनिपात्यताम् ।
एकैकशो नियोक्ष्यामि तथा कुरुत पुत्रकाः ॥ ४२ ॥
ततो युधिष्ठिरं पूर्वमुवाचाङ्गिरसां वरः ।
संधत्स्व बाणं दुर्धर्ष मद्वाक्यान्ते विमुञ्च तम् ॥ ४३ ॥
ततो युधिष्ठिरः पूर्वं धनुर्गृह्य परंतपः ।
तस्थौ भासं समुद्दिश्य गुरुवाक्यप्रचोदितः ॥ ४४ ॥
ततो विततधन्वानं द्रोणस्तं कुरुनंदनम् ।
स मुहूर्तादुवाचेदं वचनं भरतर्षभ ॥ ४५ ॥

पश्यैनं त्वं द्रुमाग्रस्थं भासं नरवरात्मज ।
पश्यामीत्येवमाचार्यं प्रत्युवाच युधिष्ठिरः ॥ ४७ ॥
स मुहूर्तादिव पुनर्द्रोणस्तं प्रत्यभाषत ।
अथ वृक्षमिमं मां वा भ्रातॄन्वापि प्रपश्यसि ॥ ४७ ॥
तमुवाच स कौन्तेयः पश्याम्येनं वनस्पतिम् ।
भवन्तं च तथा भ्रातॄन्भासं चेति पुनः पुनः ॥ ४८ ॥
तमुवाचापसर्पेति द्रोणोऽप्रीतमना इव ।
नैतच्छक्यं त्वया वेद्धुं लक्ष्यमित्येव कुत्सयन् ॥ ४९ ॥
ततो दुर्योधनादींस्तान् धार्तराष्ट्रान्महायशाः ।
तेनैव क्रमयोगेन जिज्ञासुः पर्यपृच्छत ॥ ५० ॥
अन्यांश्च शिष्यान्भीमादीन् राज्ञश्चैवान्यदेशजान् ।
तथा च सर्वे तत्सर्वं पश्याम इति कुत्सिताः ॥ ५१ ॥
ततो धनंजयं द्रोणः स्मयमानोऽभ्यभाषत ।
त्वयेदानीं प्रहर्तव्यमेतल्लक्ष्यं विलोक्यताम् ॥ ५२ ॥
मद्वाक्यसमकालं ते मोक्तव्योऽत्र भवेच्छरः ।
वितत्य कार्मुकं पुत्र तिष्ठ तावन्मुहूर्तकम् ॥ ५३ ॥
एवमुक्तः सव्यसाची मण्डलीकृतकार्मुकः ।
तस्थौ भासं समुद्दिश्य गुरुवाक्यप्रचोदितः ॥ ५४ ॥
मुहूर्तादिव तं द्रोणस्तथैव समभाषत ।
पश्यस्येनं स्थितं भासं द्रुमं मामपि चार्जुन ॥ ५५ ॥
पश्याम्येकं भासमिति द्रोणं पार्थोऽभ्यभाषत ।
न तु वृक्षं भवन्तं वा पश्यामीति च भारत ॥ ५६ ॥
ततः प्रीतमना द्रोणो मुहूर्तादिव तं पुनः ।
प्रत्यभाषत दुर्धर्षः पाण्डवानां महारथम् ॥ ५७ ॥
भासं पश्यसि यद्येनं तथा ब्रूहि पुनर्वचः ।
शिरः पश्यामि भासस्य न गात्रमिति सोऽब्रवीत् ॥ ५८ ॥

अर्जुनेनैवमुक्तस्तु द्रोणो हृष्टतनूरुहः ।
मुञ्चस्वेत्यब्रवीत्पार्थं स मुमोचाविचारयन् ॥ ५९ ॥
ततस्तस्य नगस्थस्य क्षुरेण निशितेन च ।
शिर उत्कृत्य तरसा पातयामास पाण्डवः ॥ ६० ॥
तस्मिन्कर्मणि संसिद्धे पर्यष्वजत पाण्डवम् ।
मेने च द्रुपदं संख्ये सानुबंधं पराजितम् ॥ ६१ ॥

महाभारत–आदिपर्व–अध्याय १३१–१३२.

## ५४ चतुर्णां जामातॄणाम् ।

अस्त्यत्र धरापीठे विकण्टकं नाम पुरम् । तत्र महाधन ईश्वरो नाम भाण्डपतिः । तस्य चत्वारो जामातृका अवन्तीपीठात्प्राघूर्णका विकण्टकपुरे सामायताः । ते च तेन महता गौरवेणाभ्यर्चिता भोजनाच्छादनादिभिः । एवं तेषां तत्र वसतां मासषट्कं संजातम् । तत ईश्वरेण स्वभार्योक्ता । यदेते जामातरः परमगौरवेणावर्जिताः स्वानि गृहाणि न गच्छन्ति । तत्किं कथ्यते । विनापमानं न यास्यन्ति । तदद्य भोजनवेलायां पादप्रक्षालनार्थं जलं न देयं येनापमानं ज्ञात्वा परित्यज्य गच्छन्ति । तथानुष्ठिते गर्गः पादप्रक्षालनापमानात्सोमो लघ्वासनदानाद्दत्तः कदशनतो यातः । एवं ते त्रयोऽपि परित्यज्य गताः । चतुर्थः श्यामलको यावन्न याति तावदर्धचन्द्रप्रदानेन निष्कासितः । अतोऽहं ब्रवीमि ।

गर्गो हि पादशौचाल्लघ्वासनदानतो गतः सोमः ।
दत्तः कदशनभोज्यात् श्यामलकश्चार्धचन्द्रेण ॥

पञ्चतन्त्रम् ।

## ५५ हेमन्तैश्वर्यम् ।

सृष्टींतील देखाव्यांचें हुबेहूब व चटकदार वर्णन करण्यामध्यें वाल्मीकीच्या तोडीचा दुसरा संस्कृत कवि नाहीं. हें खालील हेमन्तऋतूचें वर्णन वाचलें असतां दिसून येईल. थंडी आपला प्रभाव कसा गाजवीत आहे हें अगदीं सरळ पण वक्तृत्वानें भरलेल्या भाषेंत सांगितलें आहे. वाल्मीकीच्या भाषेंत

केवळ ठराविक उपमा किंवा रूपकें येत नाहींत. प्रत्यक्ष स्थिति अवलोकन करीत असतां निरनिराळ्या प्रसंगाप्रमाणें स्वाभाविकपणें सुचणारे असे दृष्टान्त दिलेले असतात.

वसतस्तस्य तु सुखं राघवस्य महात्मनः ।
शरद्व्यपाये हेमन्त ऋतुरिष्टः प्रवर्तत ॥ १ ॥
स कदाचित् प्रभातायां शर्वर्यां रघुनंदनः ।
प्रययावभिषेकार्थं रम्यां गोदावरीं नदीम् ॥ २ ॥
प्रह्वः कलशहस्तस्तु सीतया सह वीर्यवान् ।
पृष्ठतोऽनुव्रजन् भ्राता सौमित्रिरिदमब्रवीत् ॥ ३ ॥
अयं स कालः संप्राप्तः प्रियो यस्ते प्रियंवद ।
अलंकृत इवाभाति येन संवत्सरः शुभः ॥ ४ ॥
नीहारपरुषो लोकः पृथिवी सस्यमालिनी ।
जलान्यनुपभोग्यानि सुभगो हव्यवाहनः ॥ ५ ॥
नवाग्रयणपूजाभिरभ्यर्च्य पितृदेवताः ।
कृताग्रयणकाः काले सन्तो विगतकल्मषाः ॥ ६ ॥
प्राज्यकामा जनपदाः संपन्नतरगोरसाः ।
विचरन्ति महीपाला यात्रार्थं विजिगीषवः ॥ ७ ॥
सेवमाने दृढं सूर्ये दिशमन्तकसेविताम् ।
विहीनतिलकेव स्त्री नोत्तरा दिक् प्रकाशते ॥ ८ ॥
प्रकृत्या हिमकोशाढ्यो दूरसूर्यश्च सांप्रतम् ।
यथार्थनामा सुव्यक्तं हिमवान् हिमवान् गिरिः ॥ ९ ॥
अत्यन्तसुखसंचारा मध्याह्ने स्पर्शतः सुखाः ।
दिवसाः सुभगादित्याश्छायासलिलदुर्भगाः ॥ १० ॥
मृदुसूर्याः सुनीहाराः पटुशीताः समाहिताः ।
शून्यारण्या हिमध्वस्ता दिवसा भान्ति सांप्रतम् ॥ ११ ॥
निवृत्ताकाशशयनाः पुष्यनीता हिमारुणाः ।
शीतवृद्धतरायामास्त्रियामा यान्ति सांप्रतम् ॥ १२ ॥

रविसंक्रान्तसौभाग्यस्तुषारारुणमण्डलः ।
निःश्वासान्ध इवादर्शश्चन्द्रमा न प्रकाशते ॥ १३ ॥
ज्योत्स्ना तुषारमलिना पौर्णमास्यां न राजते ।
सीतेव चातपश्यामा लक्ष्यते न च शोभते ॥ १४ ॥
प्रकृत्या शीतलस्पर्शो हिमविद्धश्च सांप्रतम् ।
प्रवाति पश्चिमो वायुः काले द्विगुणशीतलः ॥ १५ ॥
वाष्पच्छन्नान्यरण्यानि यवगोधूमवन्ति च ।
शोभन्तेऽभ्युदिते सूर्ये नदद्भिः क्रौंचसारसैः ॥ १६ ॥
खर्जूरपुष्पाकृतिभिः शिरोभिः पूर्णतण्डुलैः ।
शोभन्ते किंचिदालम्बाः शालयः कनकप्रभाः ॥ १७ ॥
मयूखैरुपसर्पद्भिर्हिमनीहारसंवृतैः ।
दूरमप्युदितः सूर्यः शशाङ्क इव लक्ष्यते ॥ १८ ॥
आग्राह्यवीर्यः पूर्वाह्णे मध्याह्ने स्पर्शतः सुखः ।
संसक्तः किंचिदापाण्डुरातपः शोभते क्षितौ ॥ १९ ॥
अवश्यायनिपातेन किंचित्प्रक्लिन्नशाद्वला ।
वनानां शोभते भूमिर्निविष्टतरुणातपा ॥ २० ॥
स्पृशन्सुविपुलं शीतमुदकं द्विरदः सुखम् ।
अत्यन्ततृषितो वन्यः प्रतिसंहरते करम् ॥ २१ ॥
एते हि समुपासीना विहगा जलचारिणः ।
नावगाहन्ति सलिलमप्रगल्भा इवाहवम् ॥ २२ ॥
अवश्यायतमोनद्धा नीहारतमसावृताः ।
प्रसुप्ता इव लक्ष्यन्ते विपुष्पा वनराजयः ॥ २३ ॥
वाष्पसंछन्नसलिला रुतविज्ञेयसारसाः ।
हिमार्द्रवालुकास्तीरैः सरितो भांति सांप्रतम् ॥ २४ ॥
तुषारपतनाच्चैव मृदुत्वाद्भास्करस्य च ।
शैत्यादगाग्रस्थमपि प्रायेण रसवज्जलम् ॥ २५ ॥

जराझर्झरितैः पत्रैः शीर्णकेसरकर्णिकैः ।
नालशेषा हिमध्वस्ता न भान्ति कमलाकराः ॥ २६ ॥

रामायण–अरण्यकाण्ड–सर्ग १६.

## ५६ बकनकुलयोः

अस्ति कस्मिंश्चिद्वनोद्देशे बहुबकसनाथो वटपादपः । तस्य कोटरे कृष्णसर्पः प्रतिवसति स्म । स च बकबालकानजातपक्षानपि सदैव भक्षयन्कालं नयति । अथैको बको भक्षितशिशुर्वैराग्यात्सरस्तीरमासाद्य बाष्पपूरप्लुतलोचनोऽधोमुखस्तिष्ठति । तं च तादृक्चेष्टितमवलोक्य कुलीरः प्रोवाच । माम, किमेवं रुद्यते भवताद्य । स आह । भद्र किं करोमि । मम मन्दभाग्यस्य बालकाः कोटरनिवासिना सर्पेण भक्षिताः ।

दुःखितोऽहं तद्दुःखेन । तत्कथय मे यद्यस्ति कश्चिदुपायस्तद्विनाशाय । तदाकर्ण्य कुलीरश्चिन्तयामास । अयं तावदस्मत्सहजवैरी । तथोपदेशं प्रयच्छामि सत्यानृतं यथान्येऽपि बकाः सर्वे संक्षयमायान्ति । उक्तं च ।

नवनीतसमां वाणीं कृत्वा चित्तं सुनिर्दयम् ।
तथा प्रबोध्यते शत्रुः सान्वयो म्रियते यथा ॥

आह च । माम, यद्येवं तन्मत्स्यमांसशकलानि नकुलस्य बिलद्वारात् सर्पकोटरं यावत्प्रक्षिप यथा नकुलस्तन्मार्गेण गत्वा तं दुष्टसर्पं विनाशयति । अथ तथानुष्ठिते मत्स्यमांसानुसारिणा नकुलेन तं कृष्णसर्पं निहत्य तेऽपि तद्वृक्षाश्रयाः सर्वे बकाश्च शनैःशनैर्भक्षिताः । अतोऽहं ब्रवीमि ।

उपायं चिन्तयेत्प्राज्ञस्तथापायं च चिन्तयेत् ।
पश्यतो बकमूर्खस्य नकुलेन हता बकाः ॥

पञ्चतन्त्रम्

## ५७ नीलीभाण्डपतितस्य सृगालस्य ।

अस्ति सृगालः कश्चित्स्वेच्छया नगरोपान्ते भ्रमन्नीलसंधानभाण्डे निपतितः । पश्चात्तत उत्थातुमसमर्थः प्रातरात्मानं मृतवत्संदर्श्य स्थितः । अथ नीलीभाण्डस्वामिनासावुत्थाप्य दूरे नीत्वा परित्यक्तः । ततोऽसौ वनं गत्वात्मानं नीलवर्ण-

मवलोक्याचिन्तयत् । अहमिदानीमुत्तमवर्णः । तदात्मनः किमुत्कर्षं न साधयामि इत्यालोच्य सृगालानाहूय तेनोक्तम् । अहं भगवत्या वनदेवतया स्वहस्तेनारण्यराज्ये सर्वौषधिरसेनाभिषिक्तः । पश्यत मम वर्णम् । तदद्यारभ्यास्मदाज्ञयास्मिन्नरण्ये व्यवहारः कार्यः । सृगालाश्च तं विशिष्टवर्णमवलोक्य साष्टांगपातं प्रणम्योचुः । यथाज्ञापयति देवः । ततोऽनेन क्रमेण सर्वेष्वरण्यवासिष्वाधिपत्यं तस्य बभूव । ततस्तेन सिंहव्याघ्रादीनुत्तमपरिजनान्प्राप्य सृगालानवलोक्य लज्जमानेनावज्ञया दूरीकृताः स्वज्ञातयः । ततो विषण्णान्सृगालानवलोक्य वृद्धसृगालेन केनचित्प्रतिज्ञातम् । मा विषीदत । एवं चेदनेनानीतिज्ञेन वयं मर्मज्ञाः परिभूताः तद्यथायं नश्यति तन्मया विधेयम् । यतोऽमी व्याघ्रादयो वर्णमात्रविप्रलब्धाः सृगालमज्ञात्वा राजानममुं मन्यन्ते तद्यथायं परिचीयते तथा कुरुत । तत्र चैवमनुष्ठेयं यथा वदामि । यदा सर्वे संध्यासमये तत्संनिधाने महारावमेकदा करिष्यथ ततस्तं शब्दमाकर्ण्य स्वभावात्तेनापि शब्दः कर्तव्यः । यतः ।

यः स्वभावो हि यस्य स्यात्तस्यासौ दुरतिक्रमः ।
श्वा यदि क्रियते भोगी तत्किं नाश्नात्युपानहम् ॥

ततः शब्दाद्विज्ञाय व्याघ्रेण हन्तव्यः । तथानुष्ठिते सति तद् वृत्तम् । तथा चोक्तम् ।

छिद्रं मर्म च वीर्यं च विजानाति निजो रिपुः ।
दहत्यन्तर्गतश्चैव शुष्कवृक्षमिवानलः ॥

अतोऽहं ब्रवीमि ।

आत्मपक्षं परित्यज्य परपक्षे च यो रतः ।
स परैर्हन्यते मूढो नीलवर्णसृगालवत् ॥

हितोपदेशः

## ५८ अतिलौल्यम्

आस्ति मालवविषये पद्मगर्भाभिधानं नाम सरः । तत्रैको वृद्धबकः सामर्थ्यहीनस्तथोद्विग्नमिवात्मानं दर्शयित्वा स्थितः। स च केनचित्कुलीरेण दूरादेव पृष्टः; किमिति भवानाहारपरित्यागेन तिष्ठति । बकेनोक्तम् । मत्स्या मम जीवनहेतवः।

ते चावश्यमेव कैवर्तैर्व्यापादयितव्या इति नगरोपान्ते पर्यालोचना मयाकर्णिता तादितो वर्तनाभावादस्मन्मरणमुपस्थितम् । इति ज्ञात्वाहमाहारेऽपि मन्दादरो भूतः । तच्छ्रुत्वा सर्वैर्मत्स्यैरालोचितम् । इह समये तावदुपकारक एवायमुपलक्ष्यतेऽस्माकम् । तदयमेव यथाकर्तव्यं पृच्छयताम् । तथा चोक्तम् ।

उपकर्त्रारिणा संधिर्न मित्रेणापकारिणा ।
उपकारापकारौ हि लक्ष्यं लक्षणमेतयोः ॥

मत्स्या ऊचुः । भो बक अस्माकं कुत्र रक्षणोपायः । बको ब्रूते । अस्ति रक्षणहेतुर्जलाशयान्तरम् । तत्राहमेकैकशो । युष्मान्नयामि । मत्स्यैरपि भयादुक्तम् । एवमस्तु । ततोऽसौ दुष्टबकस्तान्मत्स्यानेकैकान्नीत्वा कस्मिंश्चिद्देशे खादित्वा पुनरागत्य वदति । ते मया जलाशयान्तरे स्थापिताः । अनन्तरं कुलीरस्तमुवाच भो बक मामपि तत्र नय । ततो बकोऽप्यपूर्वकुलीरमांसार्थी सादरं तं नीत्वा स्थले धृतवान् । कुलीरोऽपि मत्स्यकंकालाकीर्णां भूमिं दृष्ट्वाचिन्तयत् । हा हतोऽस्मि मन्दभाग्यः । भवतु । इदानीं समयोचितं व्यवहारामि । यतः ।

तावद्भयात्तु भेतव्यं यावद्भयमनागतम् ।
आगतं तु भयं दृष्ट्वा प्रहर्तव्यमभीतवत् ॥

अपरं च ।

अयुद्धे हि यदा पश्येन्न किंचिद्धितमात्मनः ।
युध्यमानस्तदा प्राज्ञो म्रियेत रिपुणा सह ॥

इत्यालोच्य स कुलीरस्तस्य बकस्य ग्रीवां चिच्छेद । स बकः पञ्चत्वं गतः ॥ अतोऽहं ब्रवीमि ॥

भक्षयित्वा बहून्मत्स्यानुत्तमाधममध्यमान् ।
अतिलौल्याद् बकः कश्चिन्मृतः कर्कटकग्रहात् ॥

हितोपदेशः

## ५९ महतां व्यपदेशेन कार्यसिद्धिः ।

कदाचिद्वर्षास्वपि वृष्टेरभावात्तृषार्तो गजयूथो यूथपतिमाह । नाथ कोऽप्युपायोऽस्माकं जीवनाय नास्ति । अस्त्यत्र क्षुद्रजन्तूनां निमज्जनस्थानम् । वयं

च निमज्जनाभावादन्धा इव क्व यामः किं वा कुर्मः । ततो हस्तिराजो नातिदूरं गत्वा निर्मलं ह्रदं दर्शितवान् । ततस्तत्तीरावस्थिताः शशकाः गजयूथपादाहतिभिर्बहवश्चूर्णिताः । अनन्तरं **शिलीमुखो** नाम शशकः सर्वानाहूय चिन्तयामास । अनेन गजयूथेन पिपासाकुलितेन प्रत्यहमेवागन्तव्यम् । अतो विनंक्ष्यत्यस्मत्कुलम् । अथ **विजयो** नाम वृद्धशशकोऽवदत् । मा विषीदत । प्रतीकारो मया कर्तव्यः । इति प्रतिज्ञाय चलितः । गच्छता च तेनालोचितम् । कथं मया गजयूथपनिकटे गत्वा वक्तव्यम् । यतः ।

**स्पृशन्नपि गजो हन्ति जिघ्रन्नपि भुजंगमः ।**
**हसन्नपि नृपो हन्ति मानयन्नपि दुर्जनः ॥**

अतोऽहं पर्वतशिखरमारुह्य यूथनाथमभिवादयामि । तथानुष्ठिते सति यूथनाथ उवाच । कस्त्वम् । कुतः समायातः । स ब्रूते । दूतोऽहं भगवता चन्द्रेण प्रेषितः । यूथपतिराह । कार्यमुच्यताम् । **विजयो** वदति । शृणु गजेन्द्र ।

**उद्यतेष्वपि शस्त्रेषु दूतो वदति नान्यथा ।**
**सदैवावध्यभावेन यथार्थस्य हि वाचकः ॥**

तदहं तदाज्ञया ब्रवीमि । शृणु । यदेते शशकाश्चन्द्रसरोरक्षकास्त्वया निःसारितास्तन्न युक्तं कृतम् । यतो रक्षकास्ते शशका मदीया अत एव लोके मे शशाङ्क इति प्रसिद्धिः । एवमुक्तवति दूते स यूथपतिर्भयादिदमाह । इदमज्ञानतः कृतम् । पुनर्न गमिष्यामि । दूत उवाच । तदत्र सरसि भगवन्तं चन्द्रमसं प्रकोपात्कम्पमानं प्रणम्य प्रसाद्य च गच्छ । ततस्तेन रात्रौ नीत्वा तत्र जले चञ्चलं चन्द्रप्रतिबिम्बं दर्शयित्वा स यूथपतिः प्रणामं कारितः । देव अज्ञानादेवानेनापराधः कृतः । तत्क्षम्यतामित्युक्त्वा तेन शशकेन स यूथपतिः प्रस्थापितः । अतोऽहं ब्रवीमि ।

**व्यपदेशेन महतां सिद्धिः संजायते परा ।**
**शशिनो व्यपदेशेन वसन्ति शशकाः सुखम् ॥**

हितोपदेशः

## ६० गन्धमादनप्रवेशः ।

दिव्य अस्त्रें संपादन करण्यासाठीं अर्जुन तपश्चर्येस निघून गेल्यानंतर कांहीं काळानें पाण्डव द्रौपदीसह तीर्थयात्रेस निघाले. तीर्थयात्रा करीत असतांना वाटेंत पुण्यस्थानें व तीर्थें पाहात पाहात ते गन्धमादन पर्वताकडे चालले होते. इतक्यांत एक भयंकर वादळ कोसळून गारांचा वर्षाव झाला व पावसाची मुसळधार सुरू झाली; तेव्हां सर्व जणांना झाडांचा आश्रय घ्यावा लागला. या वादळाचें व पुढें लगेच लागलेल्या बदरिकाश्रमाचें व गन्धमादन पर्वताचें हृदयंगम वर्णन खालीं दिलें आहे. हें वर्णन वाल्मीकीच्या निरानिराळ्या प्रसंगांच्या वर्णनाशीं ताडून पाहावें. भारतामध्यें, घडलेल्या गोष्टींचें सरळ वर्णन केलेलें असतें. रामायणामध्यें कवि आपल्या कल्पनाचातुर्यानें वस्तुस्थितीचें खुलवून वर्णन करितो.

ते शूरास्ततधन्वानस्तूणवन्तः समार्गणाः ।
बद्धगोधाङ्गुलित्राणाः खड्गवन्तोऽमितौजसः ॥ १ ॥
परिगृह्य द्विजश्रेष्ठाञ्ज्येष्ठाः सर्वधनुष्मताम् ।
पाञ्चालीसहिता राजन् प्रययुर्गन्धमादनम् ॥ २ ॥
सरांसि सरितश्चैव पर्वतांश्च वनानि च ।
वृक्षांश्च बहुलच्छायान्ददृशुर्गिरिमूर्धनि ॥ ३ ॥
चेरुरुच्चावचाकारान्देशान् विषमसंकटान् ।
पश्यन्तो मृगजातानि बहूनि विविधानि च ॥ ४ ॥
प्रविशत्स्वथ वीरेषु पर्वतं गन्धमादनम् ।
चण्डवातं महद्वर्षं प्रादुरासीद्विशांपते ॥ ५ ॥
ततो रेणुः समुद्भूतः सपत्रबहुलो महान् ।
पृथिवीं चांतरिक्षं च द्यां चैव सहसावृणोत् ॥ ६ ॥
न स्म प्रज्ञायते किंचिदावृते व्योम्नि रेणुना ।
न चापि शेकुस्तत्कर्तुमन्योन्यस्याभिभाषणम् ॥ ७ ॥
न चापश्यंस्ततोऽन्योन्यं तमसावृतचक्षुषः ।
आकृष्यमाणा वातेन साश्मचूर्णेन भारत ॥ ८ ॥

द्रुमाणां वातभग्नानां पततां भूतलेऽनिशम् ।
अन्येषां च महीजानां शब्दः समभवन्महान् ॥ ९ ॥
द्यौः स्वित्पतति किं भूमिर्दीर्यते पर्वतो नु किम् ।
इति ते मेनिरे सर्वे पवनेनापि मोहिताः ॥ १० ॥
ते पथानन्तरान्वृक्षान् वल्मीकान् विषमाणि च ।
पाणिभिः परिमार्गन्तो भीता वायोर्निलिल्यिरे ॥ ११ ॥
ततः कार्मुकमादाय भीमसेनो महाबलः ।
कृष्णामादाय संगम्य तस्थावाश्रित्य पादपम् ॥ १२ ॥
धर्मराजश्च धौम्यश्च निलिल्याते महावने ।
अग्निहोत्राण्युपादाय सहदेवस्तु पर्वते ॥ १३ ॥
नकुलो ब्राह्मणाश्चान्ये लोमशश्च महातपाः ।
वृक्षानासाद्य संत्रस्तास्तत्र तत्र निलिल्यिरे ॥ १४ ॥
मंदीभूते तु पवने तस्मिन् रजसि शाम्यति ।
महद्भिर्जलधारौघैर्वर्षमभ्याजगाम ह ॥ १५ ॥
भृशं चटचटाशब्दो वज्राणां क्षिप्यतामिव ।
ततस्ताश्चञ्चलाभासश्चेरुरभ्रेषु विद्युतः ॥ १६ ॥
ततोऽश्मसहिता धाराः संवृण्वन्त्यः समन्ततः ।
प्रपेतुरनिशं तत्र शीघ्रवातसमीरिताः ॥ १७ ॥
तत्र सागरगा ह्यापः कीर्यमाणाः समन्ततः ।
प्रादुरासन्सकलुषाः फेनवत्यो विशांपते ॥ १८ ॥
वहन्त्यो वारि बहुलं फेनोडुपपरिप्लुतम् ।
परिसस्रुर्महाशब्दाः प्रकर्षन्त्यो महीरुहान् ॥ १९ ॥
तस्मिन्नुपरते शब्दे वाते च समतां गते ।
गते ह्यम्भसि निम्नानि प्रादुर्भूते दिवाकरे ॥ २० ॥
निर्जग्मुस्ते शनैः सर्वे समाजग्मुश्च भारत ।
प्रतस्थिरे पुनर्वीराः पर्वतं गन्धमादनम् ॥ २१ ॥

क्रोशमात्रं प्रयातेषु पाण्डवेषु महात्मसु ।
पद्भ्यामनुचिता गन्तुं द्रौपदी समुपाविशत् ॥ २२ ॥
श्रान्ता दुःखपरीता च वातवर्षेण तेन च ।
सौकुमार्याच्च पाञ्चाली संमुमोह तपस्विनी ॥ २३ ॥
पपात सहसा भूमौ वेपन्ती कदली यथा ।
तां पतन्तीं वरोरोहां भज्यमानां लतामिव ॥ २४ ॥
नकुलः समभिद्रुत्य परिजग्राह वीर्यवान् ।
युधि०-कथं वेश्मसु गुप्तेषु स्वास्तीर्णशयनोचिता ॥ २५ ॥
भूमौ निपतिता शेते सुखार्हा वरवर्णिनी ।
सुकुमारौ कथं पादौ मुखं च कमलप्रभम् ॥ २६ ॥
मत्कृतेऽद्य वरार्हायाः श्यामतां समुपागतम् ।
किमिदं द्यूतकामेन मया कृतमबुद्धिना ॥ २७ ॥
आदाय कृष्णां चरता वने मृगगणाकुले ।
सुखं प्राप्स्यसि कल्याणि पाण्डवान् प्राप्य वै पतीन् ॥२८॥
इति द्रुपदराजेन पित्रा दत्तायतेक्षणा ।
तत्सर्वमनवाप्येयं श्रमशोकाध्वकर्शिता ॥ २९ ॥
शेते निपतिता भूमौ पापस्य मम कर्मभिः ।
तथा लालप्यमाने तु धर्मराजे युधिष्ठिरे ॥ ३० ॥
धौम्यप्रभृतयः सर्वे तत्राजग्मुर्द्विजोत्तमाः ।
ते समाश्वासयामासुराशीर्भिश्चाप्यपूजयन् ॥ ३१ ॥
स्पृश्यमाना करैः शीतैः पाण्डवैश्च मुहुर्मुहुः ।
सेव्यमाना च शीतेन जलमिश्रेण वायुना ॥ ३२ ॥
पाञ्चाली सुखमासाद्य लेभे चेतः शनैः शनैः ।
उवाच च कुरुश्रेष्ठो भीमसेनमिदं वचः ॥ ३३ ॥
बहवः पर्वता भीम विषमा हिमदुर्गमाः ।
तेषु कृष्णा महाबाहो कथं नु विचरिष्यति ॥ ३४ ॥
भीमः-त्वां राजन् राजपुत्रीं च यमौ च पुरुषर्षभ ।
स्वयं नेष्यामि राजेन्द्र मा विषादे मनः कृथाः ॥ ३५ ॥

हैडिंवश्च महावीर्यो विहगो मद्बलोपमः ।
वहेदनघ सर्वान्नो वचनात्ते घटोत्कचः ॥ ३६ ॥
भ्रातुर्वचनमाज्ञाय भीमसेनो घटोत्कचम् ।
आदिदेश नरव्याघ्रस्तनयं शत्रुकर्शनम् ॥ ३७ ॥
उह्यमाना ययुः शीघ्रं महदध्वानमल्पवत् ।
तेऽवतीर्य बहून् देशानुत्तरांश्च कुरूनपि ॥ ३८ ॥
ददृशुर्विविधाश्चर्यं कैलासं पर्वतोत्तमम् ।
तस्याभ्याशे तु ददृशुर्नरनारायणाश्रमम् ॥ ३९ ॥
ददृशुस्तां च बदरीं वृत्तस्कंधां मनोरमाम् ।
स्निग्धामविरलच्छायां श्रिया परमया युताम् ॥ ४० ॥
पत्रैः स्निग्धैरविरलैरुपेतां मृदुभिः शुभाम् ।
विशालशाखां विस्तीर्णामतिद्युतिसमन्विताम् ॥ ४१ ॥
फलैरुपचितैर्दिव्यैराचितां स्वादुभिर्भृशम् ।
मदप्रमुदितैर्नित्यं नानाद्विजगणैर्युताम् ॥ ४२ ॥
अदंशमशके देशे बहुमूलफलोदके ।
नीलशाद्वलसंछन्ने देवगन्धर्वसेविते ॥ ४३ ॥
तामुपेत्य महात्मानः सह तैर्ब्राह्मणर्षभैः ।
अवतेरुश्च ते सर्वे राक्षसस्कन्धतः शनैः ॥ ४४ ॥
ततः किंपुरुषावासं सिद्धचारणसेवितम् ।
ददृशुर्हृष्टरोमाणः पर्वतं गन्धमादनम् ॥ ४५ ॥
ततो युधिष्ठिरो भीममाहेदं प्रीतिमद्वचः ।
अहो श्रीमदिदं भीम गन्धमादनकाननम् ॥ ४६ ॥
वने ह्यस्मिन्मनोरम्ये दिव्याः काननजा द्रुमाः ।
लताश्च विविधाकारा पत्रपुष्पफलोपगाः ॥ ४७ ॥
नात्र कण्टकिनः केचिन्न च विद्यन्त्यपुष्पिताः ।
उपगीयमाना भ्रमरै राजन्ते वनराजयः ॥ ४८ ॥
लताभिः पुष्पिताग्राभिः पुष्पिताः पादपोत्तमाः ।
संश्लिष्टाः पार्थ शोभन्ते गन्धमादनसानुषु ॥ ४९ ॥

बहुतालसमुत्सेधाः शैलशृंगपरिच्युताः ।
नानाप्रस्रवणेभ्यश्च वारिधाराः पतन्ति च ॥ ५० ॥
शोभयन्ति महाशैलं नानारजतधातवः ।
क्वचिदञ्जनवर्णाभाः क्वचित्काञ्चनसन्निभाः ॥ ५१ ॥
सितासिताभ्रप्रतिमा बालसूर्यसमप्रभाः ।
उपेतं पश्य कौन्तेय शैलराजमरिंदम ॥ ५२ ॥
वैशं०–ते प्रीतमनसः शूराः प्राप्ता गतिमनुत्तमाम् ।
नातृप्यन्पर्वतेन्द्रस्य दर्शनेन परंतप ॥ ५३ ॥

महाभारत–वनपर्व–अध्याय १४३–१५८.

## ६१ शिशुपालवधः

**पांण्डवांनीं** दिग्विजय केल्यानंतर **धर्मराजानें** चक्रवर्तिपद धारण करण्या-करितां राजसूय यज्ञ केला. त्यावेळीं सर्व राजांना निमंत्रण केलें. अभिषेचनीय दिवशीं सर्व राजांहून श्रेष्ठ असेल त्यास अग्रपूजेचा मान देतात व नंतर इतर राजांची ज्याच्या त्याच्या योग्यतेप्रमाणें अर्घ्यपूजा करतात. या वहिवाटीस अनुसरून अग्रपूजेची वेळ आली असतां **धर्मराजानें भीष्मास** कोणाची अग्र-पूजा करावयाची म्हणून विचारलें. **भीष्मानें** सर्व दृष्टींनीं अग्रपूजेला पात्र अशा **श्रीकृष्णाची** पूजा करण्यास सांगितलें. ही गोष्ट **श्रीकृष्णाचा** आतेभाऊ **चेदिदेशाचा** राजा **शिशुपाल** यास पसंत पडली नाहीं व त्यानें **धर्मराजा, भीष्म** व **श्रीकृष्ण** ह्या सर्वांची खूप निंदा केली. ह्यामुळें कडा-क्याचीं भांडणें होऊन शेवटीं **श्रीकृष्णाला शिशुपालाचा** शिरच्छेद करणें भाग पडलें.

युधि०–कस्मै भवान्मन्यतेऽर्घमेकस्मै कुरुनंदन ।
उपनीयमानं युक्तं च तन्मे ब्रूहि पितामह ॥ १ ॥
ततो भीष्मः शांतनवो बुद्ध्या निश्चित्य वीर्यवान् ।
वार्ष्णेयं मन्यते कृष्णमर्हणीयतमं भुवि ॥ २ ॥
एष ह्येषां समस्तानां तेजोबलपराक्रमैः ।
मध्ये तपन्निवाभाति ज्योतिषामिव भास्करः ॥ ३ ॥

तस्मै भीष्माभ्यनुज्ञातः सहदेवः प्रतापवान् ।
उपजह्रेऽथ विधिवद्वार्ष्णेयायार्घमुत्तमम् ॥४ ॥
प्रतिजग्राह तत्कृष्णः शास्त्रदृष्टेन कर्मणा ।
शिशुपालस्तु तां पूजां वासुदेवे न चक्षमे ॥ ५ ॥
स उपालभ्य भीष्मं च धर्मराजं च संसदि ।
अवाक्षिपद्वासुदेवं चेदिराजो महाबलः ॥ ६ ॥
शिशु०—नायमर्हति वार्ष्णेयस्तिष्ठत्स्विह महात्मसु ।
महीपतिषु कौरव्य राजवत्पार्थिवार्हणाम् ॥ ७ ॥
बाला यूयं न जानीध्वं धर्मः सूक्ष्मो हि पाण्डवाः ।
अयं च स्मृत्यतिक्रान्तो ह्यापगेयोऽल्पदर्शनः ॥ ८ ॥
त्वादृशो धर्मयुक्तो हि कुर्वाणः प्रियकाम्यया ।
भवत्यभ्यधिकं भीष्म लोकेष्ववमतः सताम् ॥ ९ ॥
कथं ह्यराजा दाशार्हो मध्ये सर्वमहीक्षिताम् ।
अर्हणामर्हति तथा यथा युष्माभिरर्चितः ॥ १० ॥
आचार्यं मन्यसे कृष्णमथवा कुरुनंदन ।
द्रोणे तिष्ठति वार्ष्णेयं कस्मादर्चितवानसि ॥ ११ ॥
ऋत्विजं मन्यसे कृष्णमथवा कुरुनंदन ।
द्वैपायने स्थिते वृद्धे कथं कृष्णोऽर्चितस्त्वया ॥ १२ ॥
दुर्योधने च राजेन्द्रे स्थिते पुरुषसत्तमे ।
कृपे च भारताचार्ये कथं कृष्णस्त्वयार्चितः ॥ १३ ॥
नैवर्त्विग् नैव चाचार्यो न राजा मधुसूदनः ।
अर्चितश्च कुरुश्रेष्ठ किमन्यत्प्रियकाम्यया ॥ १४ ॥
अथवाभ्यर्चनीयोऽयं युष्माकं मधुसूदनः ।
किं राजभिरिहानीतैरवमानाय भारत ॥ १५ ॥
वयं तु न भयादस्य कौंतेयस्य महात्मनः ।
प्रयच्छामः करान् सर्वे न लोभान्न च सांत्वनात् ॥ १६ ॥
अस्य धर्मे प्रवृत्तस्य पार्थिवत्वं चिकीर्षतः ।
करानस्मै प्रयच्छामः सोऽयमस्मान्न मन्यते ॥ १७ ॥

यदि भीताश्च कौंतेयाः कृपणाश्च तपस्विनः ।
ननु त्वयापि बोद्धव्यं यां पूजां माधवार्हसि ॥ १८ ॥
दृष्टो युधिष्ठिरो राजा दृष्टो भीष्मश्च यादृशः ।
वासुदेवोऽप्ययं दृष्टः सर्वमेतद्यथातथम् ॥ १९ ॥
इत्युक्त्वा शिशुपालस्तानुत्थाय परमासनात् ।
निर्ययौ सदसस्तस्मात्सहितो राजभिस्तदा ॥ २० ॥
ततो युधिष्ठिरो राजा शिशुपालमुपाद्रवत् ।
उवाच चैव मधुरं सांत्वपूर्वमिदं वचः ॥ २१ ॥
नेदं युक्तं महीपाल यादृशं वै त्वमुक्तवान् ।
अधर्मश्च परो राजन् पारुष्यं च निरर्थकम् ॥ २२ ॥
पश्य चैतान्महीपालांस्त्वत्तो वृद्धतरान्बहून् ।
मृष्यन्ते चार्हणां कृष्णे तद्वत्त्वं क्षन्तुमर्हसि ॥ २३ ॥
वेद तत्त्वेन कृष्णं हि भीष्मश्चेदिपते भृशम् ।
न ह्येनं त्वं तथा वेत्थ यथैनं वेद कौरवः ॥ २४ ॥
भीष्मः—नास्मै देयोऽनुनयो नायमर्हति सांत्वनम् ।
लोकवृद्धतमे कृष्णे योऽर्हणां नाभिमन्यते ॥ २५ ॥
अस्यां हि समितौ राज्ञामेकमप्यजितं युधि ।
न पश्यामि महीपालं सात्वतीपुत्रतेजसा ॥ २६ ॥
न हि केवलमस्माकमयमर्च्यतमोऽच्युतः ।
त्रयाणामपि लोकानामर्चनीयो महाभुजः ॥ २७ ॥
न केवलं वयं कामाच्चेदिराज जनार्दनम् ।
न संबन्धं पुरस्कृत्य कृतार्थं वा कथंचन ॥ २८ ॥
अर्चामहेऽर्चितं सद्भिर्भुवि भूतसुखावहम् ।
यशः शौर्यं जयं चास्य विज्ञायार्चां प्रयुञ्जमहे ॥ २९ ॥
न च कश्चिदिहास्माभिः सुबालोऽप्यपरीक्षितः ।
पूज्यतायां च गोविन्दे हेतू द्वावपि संस्थितौ ॥ ३० ॥
वेदवेदांगविज्ञानं बलं चाप्यधिकं तथा ।

श्रीकृष्णाची अग्रपूजा शिशुपालास सहन न होऊन तो सभामंडपांतून बाहेर जाऊं लागला, तेव्हां धर्म त्याचें सांत्वन करूं लागला. परंतु भीष्मानें श्रीकृष्णाची अग्रपूजा न करणारा मनुष्य सांत्वन करण्यास अयोग्य आहे असें म्हटलें व सहदेव म्हणाला कीं, ज्यास ही अग्रपूजा मान्य नसेल, त्यानें तसें म्हणावें, म्हणजे मी त्याचा वध करण्यास तयार आहें. हें ऐकून शिशुपालानें कांहीं राजे आपल्या पक्षास वळवून यज्ञास विघ्न करण्याचा बेत केला. यावर धर्मास काळजी पडल्यावरून भीष्म म्हणाले.

मा भैस्त्वं कुरुशार्दूल श्वा सिंहं हन्तुमर्हति ।
शिवः पन्थाः सुनीतोऽत्र मया पूर्वतरं वृतः ॥ ३१ ॥
न हि संबुध्यते यावत्सुप्तः सिंह इवाच्युतः ।
तेन सिंहीकरोत्येतान् नृसिंहश्चेदिपुंगवः ॥ ३२ ॥
विप्लुता चास्य भद्रं ते बुद्धिर्बुद्धिमतां वर ।
चेदिराजस्य कौंतेय सर्वेषां च महीक्षिताम् ॥ ३३ ॥
शिशु०–नावि नौरिव संबद्धा यथान्धो वान्धमन्वियात् ।
तथाभूता हि कौरव्या येषां भीष्म त्वमग्रणीः ॥ ३४ ॥
पूतनाघातपूर्वाणि कर्माण्यस्य विशेषतः ।
त्वया कीर्तयतास्माकं भूयः प्रव्यथितं मनः ॥ ३५ ॥
इच्छतां भूमिपालानां भीष्म जीवस्यसंशयम् ।
लोकविद्विष्टकर्मा हि नान्योऽस्ति भवता समः ॥ ३६ ॥
भीष्मः–इच्छतां किल नामाहं जीवाम्येषां महीक्षिताम् ।
सोऽहं न गणयाम्येतांस्तृणेनापि नराधिपान् ॥ ३७ ॥
एवमुक्ते तु भीष्मेण ततः संचुक्रुशुर्नृपाः ।
केचिज्जहृषिरे तत्र केचिद्भीष्मं जगर्हिरे ॥ ३८ ॥
केचिदूचुर्महेष्वासाः श्रुत्वा भीष्मस्य तद्वचः ।
पापोऽवलिप्तो वृद्धश्च नायं भीष्मोऽर्हति क्षमाम् ॥ ३९ ॥
हन्यतां दुर्मतिर्भीष्मः पशुवत्साध्वयं नृपाः ।
सर्वैः समेत्य संरब्धैः दह्यतां वा कटाग्निना ॥ ४० ॥

भीष्मः–उक्तस्योक्तस्य नेहान्तमहं समुपलक्षये ।
पशुवद्घातनं वा मे दहनं वा कटाग्निना ॥ ४१ ॥
क्रियतां मूर्ध्नि वो न्यस्तं मयेदं सकलं पदम् ।
एष तिष्ठति गोविन्दः पूजितोऽस्माभिरच्युतः ॥ ४२ ॥
यस्य वा त्वरते बुद्धिर्मरणाय स माधवम् ।
कृष्णमाह्वयतामद्य युद्धे चक्रगदाधरम् ॥ ४३ ॥
शिशु०–आह्वये त्वां रणं गच्छ मया सार्धं जनार्दन ।
यावदद्य निहन्मि त्वां सहितं सर्वपाण्डवैः ॥ ४४ ॥
कृष्णः–शृण्वन्तु मे महीपाला येनैतत्क्षमितं मया ।
अपराधशतं क्षाम्यं मातुरस्यैव याचने ॥ ४५ ॥
दत्तं मया याचितं च तद्वै पूर्णं हि पार्थिवाः ।
अधुना मारयिष्यामि पश्यतां वो महीक्षिताम् ॥ ४६ ॥
एवमुक्त्वा यदुश्रेष्ठश्चेदिराजस्य तत्क्षणात् ।
व्यपाहरच्छिरः क्रुद्धश्चक्रेणामितकर्षणः ॥ ४७ ॥

महाभारत–सभापर्व–अध्याय ३६–४५.

## ६२ दर्शनमात्रेण न भेतव्यम्

कश्चिच्छृगालः क्षुत्क्षामकण्ठ इतस्ततः परिभ्रमन्वने सैन्यद्वयसंग्रामभूमिमपश्यत् । तस्यां च दुन्दुभेः पतितस्य वायुवशाद्वल्लीशाखाग्रैर्हन्यमानस्य शब्दमश्रृणोत् । अथ क्षुभितहृदयाश्चिन्तयामास । अहो विनष्टोऽस्मि । तद्यावन्नास्य प्रोच्चारितशब्दस्य दृष्टिगोचरे गच्छामि तावद् व्रजामि । अथवा नैतद्युज्यते सहसैव पितृपैतामहं वनं त्यक्तुम् । उक्तं च ।

भये वा यदि वा हर्षे संप्राप्ते यो विमर्शयेत् ।
कृत्यं न कुरुते वेगान्न स संतापमाप्नुयात् ॥

तत्तावज्जानामि कस्यायं शब्दः । धैर्यमालम्ब्य विमर्शयन् यावन्मन्दं मन्दं गच्छति तावन्दुंदुभिमपश्यत् । स च तं परिज्ञाय समीपं गत्वा स्वयमेव कौतुकादताडयत् । भूयश्च हर्षादाचिन्तयत् । अहो चिरादेतदस्माकं महद्भोजनमाप-

तितम् । तन्नूनं प्रभूतमांसमेदोऽसृग्भिः परिपूरितं भविष्यति । ततः परुषचर्मावगुण्ठितं तत्कथमपि विदार्यैकदेशे छिद्रं कृत्वा संहृष्टमना मध्ये प्रविष्टः । परं चर्मविदारतो दंष्ट्राभङ्गः समजनि । अथ निराशीभूतस्तद्दारुशेषमवलोक्य श्लोकमेनमपठत् ।

पूर्वमेव मया ज्ञातं पूर्णमेतद्धि मेदसा ।
अनुप्रविश्य विज्ञातं यावच्चर्म च दारु च ॥

पञ्चतन्त्रम्.

## ६३ यस्मिन्कुले त्वमुत्पन्नो गजस्तत्र न हन्यते ।

कस्मिंश्चिद्वनोद्देशे सिंहदंपती प्रतिवसतः स्म । अथ सिंही पुत्रद्वयमजीजनत् । सिंहोऽपि नित्यमेव मृगान्व्यापाद्य सिंह्या ददाति । अथ कदाचित्तेन किमपि नासादितम् । वने भ्रमतोऽपि तस्य रविरस्तं गतः । अथ तेन स्वगृहमागच्छता शृगालशिशुः प्राप्तः । स च बालकोऽयमिति अवधार्य यत्नेन दंष्ट्रामध्यगतं कृत्वा सिंह्या जीवन्तमपि समर्पितवान् । ततः सिंह्याभिहितम् । भोः कान्त आनीतं किंचिदस्माकं भोजनम् । सिंह आह । प्रिये मयाद्यैनं शृगालशिशुं परित्यज्य न किंचित्सत्त्वमासादितम् । स च मया बालोऽयमिति मत्वा न व्यापादितः । उक्तं च ।

स्त्रीलिङ्गिविप्रबालानां प्रहर्तव्यं न कर्हिचित् ।
प्राणत्यागेऽपि संजाते विश्वस्तानां विशेषतः ॥

इदानीमेनं भक्षयित्वा पथ्यं कुरु । प्रभातेऽन्यदुपार्जयिष्यामि । सा आह । भोः कान्त, त्वया बालकोऽयमिति मत्वा न व्यापादितः । तदहं कथं स्वोदरार्थे व्यापादयामि । उक्तं च ।

अकृत्यं नैव कृत्यं स्यात्प्राणत्यागेऽपि संस्थिते ।
न च कृत्यं विमुञ्चेत एष धर्मः सनातनः ॥

तस्मान्ममायं तृतीयः पुत्रो भविष्यति । इत्युक्त्वा तमपि स्वस्तनक्षीरेण पुष्टिमनयत् । एवं ते त्रयोऽपि शिशवः परस्परमज्ञातजातिविशेषा एकत्र विहारिणो बाल्यमतिवाहयन्ति । अथ कदाचित्तत्र वने भ्राम्यन्वनगजो दृष्टः । तं दृष्ट्वा तौ सिंहसुतौ द्वावपि कुपिताननौ तं प्रति प्रचलितौ यावत्, तावत्तेन शृगालसुतेना-

भिहितम् । अहो गजोऽयं युष्मत्कुलशत्रुः । तन्न गन्तव्यमेतस्याभिमुखम् । एवमुक्त्वा गृहं प्रधावितः । तावपि ज्येष्ठत्वासान्निरुत्साहतां गतौ । अथचा साध्विदमुच्यते ।

एकेनापि सुधीरेण सोत्साहेन रणं प्रति ।
सोत्साहं जायते सैन्यं भग्ने भङ्गमवाप्नुयात् ॥
अत एव हि वाञ्छन्ति भूपा योधान्महाबलान् ।
शूरान्धीरान्कृतोत्साहान्वर्जयन्ति च कातरान् ॥

ततो द्वावपि पित्रोरग्रतो विहसन्तौ ज्येष्ठभ्रातृचेष्टितमूचतुर्यथा गजं दृष्ट्वा दूरतोऽपि नष्टः । सोऽपि तदाकर्ण्य कोपाविष्टः प्रस्फुरिताधरपल्लवः ताम्रलोचनः त्रिशिखीं भृकुटीं कृत्वा तौ निर्भर्त्सयन्परुषतरवचनान्युवाच । ततः सिंह्यैकान्ते नीत्वा प्रबोधितः । मैवं कदाचिज्जल्प भवदीयलघुभ्रातरावेतौ । अथासौ प्रभूतकोपाविष्टस्तामित्युवाच । किमहमेताभ्यां शौर्यरूपेण विद्याभ्यासेन वा न्यूनो येन मामुपहसतः । तन्मयावश्यमेतौ व्यापादनीयौ । तदाकर्ण्य सिंही तस्य जीवितमिच्छन्ती प्राह ।

शूरोऽसि कृतविद्योऽसि दर्शनीयोऽसि पुत्रक ।
यस्मिन्कुले त्वमुत्पन्नो गजस्तत्र न हन्यते ॥

परं शृगालसुतस्त्वं कृपया मया स्वकीयपानेन पुष्टिं नीतः । तद्यावन्नैतौ त्वां शृगालं जानीतः तावद् द्रुतं गत्वा स्वजातिमध्ये भव । नो चेदाभ्यां हतो मृत्युपथं समेष्यसि । सोऽपि तद्वचनं श्रुत्वा भयव्याकुलमनाः क्षणात्प्रनष्टः ।

पञ्चतन्त्रम्

## ६४ भक्ष्यभक्षकयोः प्रीतिर्विपत्तेरेव कारणम् ।

आस्ति **मगधदेशे चम्पकवती** नामारण्यानी । तस्यां चिरान्महता स्नेहेन मृगकाकौ निवसतः । स च मृगः स्वेच्छया भ्राम्यन्पुष्टाङ्गः केनचित्सृगालेनावलोकितः । तं दृष्ट्वा सृगालोऽचिन्तयत् । आः कथमेतन्मांसं सुललितं भक्षयामि । भवतु । विश्वासं तावदुत्पादयामि । इत्यालोच्योपसृत्याब्रवीत् । मित्र कुशलं ते । मृगेणोक्तं । कस्त्वम् । जम्बुको ब्रूते । क्षुद्रबुद्धिनामा जम्बुकोऽहम् । अत्रारण्ये मित्रबन्धुहीनो मृतवदेकाकी निवासामि । इदानीं भवन्तं मित्रमासाद्य पुनः

सबन्धुर्जीवलोकं प्रविष्टोऽस्मि । अधुना मया तवानुचरेण सर्वथा भवितव्यम् । मृगेणोक्तम् । एवमस्तु । ततोऽस्तं गते सवितरि भगवति मरीचिमालिनि मृगस्य वासभूमिं प्रति मृगजम्बुकौ गतौ । तत्र चम्पकवृक्षशाखायां सुबुद्धिनामा काको मृगस्य चिरमित्रं निवसति । तौ दृष्ट्वा काकोऽवदत् । सखे चित्राङ्ग कोऽयं द्वितीयः । मृगो ब्रूते । जम्बुकोऽयमस्मत्सख्यमिच्छन्नागतः । काको ब्रूते । मित्र अकस्मादागन्तुना सह विश्वासो नैव युक्तः । तन्न भद्रमाचरितम् । तथा चोक्तम् ।

अज्ञातकुलशीलस्य वासो देयो न कस्यचित् ।
मार्जारस्य हि दोषेण हतो गृध्रो जरद्गवः ॥

मृग आह । कथमेतत् । काकः कथयति ।

अस्ति भागीरथीतीरे गृध्रकूटनाम्नि पर्वते महान्पर्कटीवृक्षः । तस्य कोटरे दैवदुर्विपाकाद्गलितनयनो जरद्गवो नाम गृध्रः प्रतिवसति । अथ कृपया तज्जीवनाय तद्वृक्षवासिनः पक्षिणः स्वाहारात्किंचित्किंचिद्ददति । तेनासौ जीवति । अथ कदाचिद्दीर्घकर्णनामा मार्जारः पक्षिशावकान्भक्षयितुं तत्रागतः । ततस्तमायान्तं दृष्ट्वा पक्षिशावकैर्भयार्तैः कोलाहलः कृतः । तच्छ्रुत्वा जरद्गवेनोक्तम् । कोऽयमायाति । दीर्घकर्णो गृध्रमवलोक्य सभयमाह । हा हतोऽस्मि । अधुनातिसंनिधानेन पलायनमप्यशक्यम् । तद्यथा भवितव्यं तथा भवतु । एतत्समीपमुपगच्छामि । इत्यालोच्योपसृत्याब्रवीत् । आर्य त्वामभिवन्दे । गृध्रोऽवदत् । कस्त्वम् । सोऽब्रवीत् । मार्जारोऽहम् । गृध्रो ब्रूते । तद्दूरमपसर । नोचेद्धन्तव्योऽसि मया । मार्जारोऽवदत् । श्रूयतां तावदस्मद्वचनम् । ततो यद्यहं वध्यस्तदा हन्तव्यः । यतः ।

जातिमात्रेण किं कश्चिद् वध्यते पूज्यते क्वचित् ।
व्यवहारं परिज्ञाय वध्यः पूज्योऽथवा भवेत् ॥

गृध्रो ब्रूते । ब्रूहि कीदृग्व्यापारवान् । सोऽवदत् । अहमत्र गङ्गातीरे नित्यस्नायी निरामिषाशी ब्रह्मचर्येण चान्द्रायणव्रतमाचरंस्तिष्ठामि । युष्मांश्च धर्मज्ञानरतान्विश्वासभूमयः पक्षिणः सर्वे सर्वदा ममाग्रे स्तुवन्ति । अतो विद्यावयोवृद्धेभ्यो धर्मं श्रोतुमिहागतः । भवन्तश्चैतादृशा धर्मज्ञा यन्मामतिथिं हन्तुमुद्यताः । गृहस्थस्य धर्मश्चैष समुदीरितः ।

अरावप्युचितं कार्यमातिथ्यं गृहमागते ।
छेत्तुमप्यागते छायां नोपसंहरते द्रुमः ॥

किं च । यद्यन्नं नास्ति तदा प्रीतिवचसाप्यातिथिः पूज्यः । यतः ।

तृणानि भूमिरुदकं वाक्चतुर्थी च सुनृता ।
एतान्यपि सतां गेहे नोच्छिद्यन्ते कदाचन ॥

गृध्रोऽवदत् । मार्जारा हि मांसरुचयो भवन्ति । पक्षिशावकाश्चात्र निवसन्ति । तेनैवं ब्रवीमि । मार्जारोऽप्येवं श्रुत्वा भूमिं स्पृष्ट्वा कर्णौ स्पृशति ब्रूते च । मया धर्मशास्त्रं श्रुत्वा वीतरागेणेदं दुष्करं व्रतं चान्द्रायणमध्यवसायितम् । यतः परस्परं विवदमानानामपि धर्मशास्त्राणामहिंसा परमो धर्म इत्यत्रैकमत्यम् । यतः ।

सर्वहिंसानिवृत्ताश्च नराः सर्वसहाश्च ये ।
सर्वस्याश्रयभूताश्च ते नराः स्वर्गगामिनः ॥

किं च । योऽत्ति यस्य यदा मांसमुभयोः पश्यतान्तरम् ।
एकस्य क्षणिकी प्रीतिरन्यः प्राणैर्विमुच्यते ॥

शृण पुनः । स्वच्छन्दवनजातेन शाकेनापि प्रपूर्यते ।
अस्य दग्धोदरस्यार्थे कः कुर्यात्पातकं महत् ॥

एवं विश्वास्य स मार्जारस्तत्र कोटरे स्थितः । ततो दिनेषु गच्छत्सु पक्षिशावकानाक्रम्य कोटरमानीय प्रत्यहं खादति । अथ येषामपत्यानि खादितानि तैः शोकार्तैर्विलपद्भिरितस्ततो जिज्ञासा समारब्धा । तत्परिज्ञाय मार्जारः कोटरान्निःसृत्य पलायितः । पश्चात्पतत्रिभिरितस्ततो निरूपयद्भिस्तत्र तरुकोटरे शावकास्थीनि प्राप्तानि । अनन्तरं चानेनैव शावकाः खादिता इति निश्चित्य मिलित्वा तैः पक्षिभिः स गृध्रो व्यापादितः । अतोऽहं ब्रवीमि । अज्ञातकुलशीलस्येति ।

इत्याकर्ण्य स जम्बुकः सकोपमाह । मृगस्य प्रथमदर्शनदिने भवानप्यज्ञातकुलशील एवासीत् । तद्भवता सह कथमद्ययावदेतस्य स्नेहानुवृत्तिरुत्तरोत्तरं वर्धते ।

यथा चायं मृगो मम बन्धुस्तथा भवानपि । मृगोऽब्रवीत् । किमनेनोत्तरोत्तरेण । सर्वैरेकत्र विस्रम्भालापैः सुखमनुभवद्भिः स्थीयताम् । यतः ।

न कश्चित्कस्यचिन्मित्रं न कश्चित्कस्यचिद्रिपुः ।
व्यवहारेण मित्राणि जायन्ते रिपवस्तथा ॥

काकेनोक्तम् । एवमस्तु । अथ प्रातः सर्वे यथाभिमतदेशं गताः । एकदा सृगालो ब्रूते । सखे मृग एतस्मिन्नेव वनैकदेशे सस्यपूर्णं क्षेत्रमस्ति । तदहं त्वां तत्र नीत्वा दर्शयामि । तथा कृते सति मृगः प्रत्यहं तत्र गत्वा सस्यं खादति । अथ क्षेत्रपतिना तद्दृष्ट्वा पाशास्तत्र नियोजिताः । अनन्तरं पुनरागतो मृगस्तत्र चरन्पाशैर्बद्धोऽचिन्तयत् । को मामितः कालपाशादिव व्याधपाशात्त्रातुं मित्रादन्यः समर्थः । अत्रान्तरे जम्बुकस्तत्रागत्योपस्थितोऽचिन्तयत् । फलितं तावदस्माकं कपटप्रबन्धेन । मनोरथसिद्धिरपि बाहुल्यान्मे भविष्यति । एतस्योत्कृत्यमानस्य मांसासृगनुलिप्तान्यस्थीनि मयावश्यं प्राप्तव्यानि । स च मृगस्तं दृष्ट्वोल्लसितो ब्रूते । सखे छिन्धि तावन्मम बन्धनम् । सत्वरं त्रायस्व माम् । यतः ।

आपत्सु मित्रं जानीयाद्युद्धे शूरमृणे शुचिम् ।
भार्यां क्षीणेषु वित्तेषु व्यसनेषु च बान्धवान् ॥

अपरं च । उत्सवे व्यसने चैव दुर्भिक्षे शत्रुसंकटे ।
राजद्वारे श्मशाने च यस्तिष्ठति स बान्धवः ॥

जम्बुकः पाशं मुहुर्मुहुर्विलोक्याचिन्तयत् । दृढबन्धनबद्धोऽस्ति तावदयंमृगः । ब्रूते च । स्नायुनिर्मिताः पाशाः । तदद्यभट्टारकवारे कथमेतान्दन्तैः स्पृशामि । मित्र यदि नान्यथा मन्यसे तदा प्रभाते यत्त्वयोच्यते तन्मया कर्तव्यम् । इत्युक्त्वा तत्समीप आत्मानमाच्छाद्य स्थितः सः । अनन्तरं स काकः प्रदोषकाले मृगमनागतमवलोक्येतस्ततोऽन्विष्य तथाविधं दृष्ट्वोवाच । सखे किमेतत् । मृगेणोक्तम् । अवधीरितसुहृद्वाक्यस्य फलमेतत् । तथा चोक्तम् ।

सुहृदां हितकामनां यः शृणोति न भाषितम् ।
विपत् संनिहिता तस्य स नरः शत्रुनंदनः ॥

काको ब्रूते । स सृगालः क्व । मृगेणोक्तम् । मन्मांसार्थी तिष्ठत्यत्रैव । काको ब्रूते । मित्र । उक्तमेव मया पूर्वम् ।

अपराधो न मेऽस्तीति नैतद्विश्वासकारणम् ।
विद्यते हि नृशंसेभ्यो भयं गुणवतामपि ॥

परोक्षे कार्यहन्तारं प्रत्यक्षे प्रियवादिनम् ।
वर्जयेत्तादृशं मित्रं विषकुम्भं पयोमुखम् ॥

अथ प्रभाते स क्षेत्रपतिर्लगुडहस्तस्तं प्रदेशमागच्छन्काकेनावलोकितः । तमालोक्य काकेनोक्तम् । सखे मृग त्वमात्मानं मृतवत्संदर्श्य वातेनोदरं पूरयित्वा पादान्स्तब्धीकृत्य तिष्ठ । यदाहं शब्दं करोमि तदा त्वं सत्वरमुत्थाय पलायिष्यासि । मृगस्तथैव काकवचनेन स्थितः । ततः क्षेत्रपतिना हर्षोत्फुल्ललोचनेनावलोकितः । तथाविधं मृगमवलोक्यासौ आः स्वयं मृतोऽयमित्युक्त्वा मृगं बन्धनान्मोचयित्वा पाशान्संवरितुं सयत्नो बभूव । ततः कियद्दूरेऽन्तरिते क्षेत्रपतौ स मृगः काकस्य शब्दं श्रुत्वा ससंभ्रमः समुत्थाय पलायितः । तमुद्दिश्य तेन क्षेत्रपतिना प्रक्षेपात्क्षिप्तलगुडेन सृगालो व्यापादितः । अतोऽहं ब्रवीमि ।

भक्ष्यभक्षकयोः प्रीतिर्विपत्तेरेव कारणम् ।
सृगालात्पाशबद्धोऽसौ मृगः काकेन रक्षितः ॥

हितोपदेशः

## ६५ हनुमद्विषादः

सीतेच्या शोधासाठीं बहुतेक **लंका** धुंडाळली तरी **सीता** दृष्टीस पडत नाहीं तेव्हां हात हालवीत परत जाण्याची पाळी येते कीं काय ? अंगीकृत कार्य पार न पाडतां तसेंच परत जाऊन आपलें तोंड **सुग्रीवास** कसें दाखवावें ? अशा तऱ्हेची **मारुतीस** उद्विग्नता प्राप्त झाली. त्यावेळच्या त्याच्या मनाच्या स्थितीचें वर्णन कवीनें मोठ्या मार्मिक रीतीनें केलें आहे. **मारुतीची** कर्तव्यनिष्ठा किती जाज्वल्य होती हें मनन करण्यासारखें आहे.

दृष्टमन्तःपुरं सर्वं दृष्टा राक्षसयोषितः ।
न सीता दृश्यते साध्वी वृथा जातो मम श्रमः ॥ १ ॥
किं नु मां वानराः सर्वे गतं वक्ष्यन्ति संगताः ।
गत्वा तत्र त्वया वीर किं कृतं तद्वदस्व नः ॥ २ ॥
अदृष्ट्वा किं प्रवक्ष्यामि तामहं जनकात्मजाम् ।
ध्रुवं प्रायमुपासिष्ये कालस्य व्यतिवर्तने ॥ ३ ॥

किं वा वक्ष्यति वृद्धश्च जांबवानङ्गदश्च सः ।
गतं पारं समुद्रस्य वानराश्च समागताः ॥ ४ ॥

अनिर्वेदः श्रियो मूलमनिर्वेदः परं सुखम् ।
भूयस्तत्र विचेष्यामि न यत्र विचयः कृतः ॥ ५ ॥

अनिर्वेदो हि सततं सर्वार्थेषु प्रवर्तकः ।
करोति सफलं जन्तोः कर्म यच्च करोति सः ॥ ६ ॥

तस्मादनिर्वेदकरं यत्नं चेष्टेऽहमुत्तमम् ।
अदृष्टांश्च विचेष्यामि देशान्रावणपालितान् ॥ ७ ॥

आपानशाला विचितास्तथा पुष्पगृहाणि च ।
चित्रशालाश्च विचिता भूयः क्रीडागृहाणि च ॥ ८ ॥

निष्कुटान्तररथ्याश्च विमानानि च सर्वशः ।
इति संचिन्त्य भूयोऽपि विचेतुमुपचक्रमे ॥ ९ ॥

भूमीगृहांश्चैत्यगृहान्गृहातिगृहकानपि ।
उत्पतन्निपतंश्चापि तिष्ठन्गच्छन्पुनः क्वचित् ॥ १० ॥

अपवृण्वंश्च द्वाराणि कपाटान्यवघट्टयन् ।
प्रविशन्निष्पतंश्चापि प्रपतन्नुत्पतन्निव ॥ ११ ॥

सर्वमप्यवकाशं स विचचार महाकपिः ।
चतुरंगुलमात्रोऽपि नावकाशः स विद्यते ॥ १२ ॥

रावणान्तःपुरे तस्मिन्यं कपिर्न जगाम सः ।
प्राकारान्तरवीथ्यश्च वेदिकाश्चैत्यसंश्रयाः ॥
श्वभ्राश्च पुष्करिण्यश्च सर्वं तेनावलोकितम् ॥ १३ ॥

राक्षस्यो विविधाकारा विरूपा विकृतास्तथा ।
दृष्टा हनुमता तत्र न तु सा जनकात्मजा ॥ १४ ॥

उद्योगं वानरेन्द्राणां प्लवनं सागरस्य च ।
व्यर्थं वीक्ष्यानिलसुतश्चिन्तां पुनरुपागतः ॥ १५ ॥

विमानात्तु स संक्रम्य प्राकारं हरियूथपः ।
हनुमान्वेगवानासीद्यथा विद्युद्घनान्तरे ॥ १६ ॥

संपरिक्रम्य हनुमान्रावणस्य निवेशनान् ।
अदृष्ट्वा जानकीं सीतामब्रवीद्वचनं कपिः ॥ १७ ॥
भूयिष्ठं लोलिता लङ्का रामस्य चरता प्रियम् ।
न हि पश्यामि वैदेहीं सीतां सर्वाङ्गशोभनाम् ॥ १८ ॥
क्षिप्रमुत्पततो मन्ये सीतामादाय रक्षसः ।
बिभ्यतो रामबाणानामन्तरा पतिता भवेत् ॥ १९ ॥
अथवा ह्रियमाणायाः पथि सिद्धनिषेविते ।
मन्ये पतितमार्याया हृदयं प्रेक्ष्य सागरम ॥ २० ॥
रावणस्योरुवेगेन भुजाभ्यां पीडितेन च ।
तया मन्ये विशालाक्ष्या त्यक्तं जीवितमार्यया ॥ २१ ॥
उपर्युपरि सा नूनं सागरं क्रमतस्तदा ।
विचेष्टमाना पतिता समुद्रे जनकात्मजा ॥ २७ ॥
आहो क्षुद्रेण चानेन रक्षन्ती शीलमात्मनः ।
अबन्धुर्भक्षिता सीता रावणेन तपस्विनी ॥ २३ ॥
अथवा राक्षसेन्द्रस्य पत्नीभिरसितेक्षणा ।
अदुष्टा दुष्टभावाभिर्भक्षिता सा भविष्यति ॥ २४ ॥
अथवा निहिता मन्ये रावणस्य निवेशने ।
भृशं लालप्यते बाला पञ्जरस्थेव सारिका ॥ २५ ॥
जनकस्य कुले जाता रामपत्नी सुमध्यमा ।
कथमुत्पलपत्राक्षी रावणस्य वशं व्रजेत् ॥ २६ ॥
विनष्टा वा प्रणष्टा वा मृता वा जनकात्मजा ।
रामस्य प्रियभार्यस्य न निवेदयितुं क्षमम् ॥ २७ ॥
निवेद्यमाने दोषः स्याद्दोषः स्यादनिवेदने ।
कथं नु खलु कर्तव्यं विषमं प्रतिभाति मे ॥ २८ ॥
अस्मिन्नेवंगते कार्ये प्राप्तकालं क्षमं च किम् ।
भवेदिति मतिं भूयो हनुमान्प्रविचारयन् ॥ २९ ॥
यदि सीतामदृष्ट्वाहं वानरेन्द्रपुरीमितः ।
गमिष्यामि ततः को मे पुरुषार्थो भविष्यति ॥ ३० ॥

ममेदं लङ्घनं व्यर्थं सागरस्य भविष्यति ।
प्रवेशश्चैव लङ्काया राक्षसानां च दर्शनम् ॥ ३१ ॥
किं वा वक्ष्यति सुग्रीवो हरयो वापि संगताः ।
किष्किंधामनुसंप्राप्तं तौ वा दशरथात्मजौ ॥ ३२ ॥
गत्वा तु यदि काकुत्स्थं वक्ष्यामि परुषं वचः ।
न दृष्टेति मया सीता ततस्त्यक्ष्यति जीवितम् ॥ ३३ ॥
तं तु कृच्छ्रगतं दृष्ट्वा पञ्चत्वगतमानसम् ।
भृशानुरक्तमेधावी न भविष्यति लक्ष्मणः ॥ ३४ ॥
विनष्टौ भ्रातरौ श्रुत्वा भरतोऽपि मरिष्यति ।
भरतं च मृतं दृष्ट्वा शत्रुघ्नो न भविष्यति ॥ ३५ ॥
पुत्रान्मृतान्समीक्ष्याथ न भविष्यन्ति मातरः ।
कौसल्या च सुमित्रा च कैकेयी च न संशयः ॥ ३६ ॥
कृतज्ञः सत्यसंधश्च सुग्रीवः प्लवगाधिपः ।
रामं तथागतं दृष्ट्वा ततस्त्यक्ष्यति जीविताम् ॥ ३७ ॥
भर्तृजेन तु दुःखेन अभिभूता वनौकसः ।
शिरांस्यभिहनिष्यन्ति तलैर्मुष्टिभिरेव च ॥ ३८ ॥
सान्त्वनानुप्रदानेन मानेन च यशस्विना ।
लालिताः कपिनाथेन प्राणांस्त्यक्ष्यन्ति वानराः ॥ ३९ ॥
न वनेषु न शैलेषु न निरोधेषु वा पुनः ।
क्रीडामनुभविष्यन्ति समेत्य कपिकुञ्जराः ॥ ४० ॥
सुपुत्रदाराः सामात्या भर्तृव्यसनपीडिताः ।
शैलाग्रेभ्यः पतिष्यन्ति समेषु विषमेषु च ॥ ४१ ॥
विषमुद्बन्धनं वापि प्रवेशं ज्वलनस्य वा ।
उपवासमथो शस्त्रं प्रचरिष्यन्ति वानराः ॥ ४२ ॥
घोरमारोदनं मन्ये गते मयि भविष्यति ।
इक्ष्वाकुकुलनाशश्च नाशश्चैव वनौकसाम् ॥ ४३ ॥
सोऽहं नैव गमिष्यामि किष्किंधां नगरीमितः ।

न हि शक्ष्याम्यहं द्रष्टुं सुग्रीवं मैथिलीं विना ॥ ४४ ॥
मय्यगच्छति चेहस्थे धर्मात्मानौ महारथौ ।
आशया तौ धरिष्येते वानराश्च तपस्विनः ॥ ४५ ॥
हस्तादानो मुखादानो नियतो वृक्षमूलिकः ।
वानप्रस्थो भविष्यामि अदृष्ट्वा जनकात्मजाम् ॥ ४६ ॥
सागरानूपजे देशे बहुमूलफलोदके ।
चितिं कृत्वा प्रवेक्ष्यामि समिद्धमरणीसुतम् ॥ ४७ ॥
उपविष्टस्य वा सम्यग् लिङ्गिनं साधयिष्यतः ।
शरीरं भक्षयिष्यन्ति वायसाः श्वापदानि च ॥ ४८ ॥
इदमप्यृषिभिर्दृष्टं निर्याणमिति मे मतिः ।
सम्यगापः प्रवेक्ष्यामि न चेत्पश्यामि जानकीम् ॥ ४९ ॥
सुजातमूला सुभगा कीर्तिमाला यशस्विनी ।
प्रभग्ना चिररात्राय मम सीतामपश्यतः ॥ ५० ॥
विनाशे बहवो दोषा जीवन्प्राप्नोति भद्रकम् ।
तस्मात्प्राणान्धरिष्यामि ध्रुवो जीवति संगमः ॥ ५१ ॥
एवं बहुविधं दुःखं मनसा धारयन् बहु ।
नाध्यगच्छत्तदा पारं शोकस्य कपिकुञ्जरः ॥ ५२ ॥
ततो विक्रममासाद्य धैर्यवान्कपिकुञ्जरः ।
रावणं वा वधिष्यामि दशग्रीवं महाबलम् ॥ ५३ ॥
काममस्तु हृता सीता प्रत्याचीर्णं भविष्यति ।
अथवैनं समुत्क्षिप्य उपर्युपरि सागरम् ।
रामायोपहरिष्यामि पशुं पशुपतेरिव ॥ ५४ ॥
यावत्सीतां न पश्यामि रामपत्नीं यशस्विनीम् ।
तावदेतां पुरीं लङ्कां विचिनोमि पुनः पुनः ॥ ५५ ॥
अशोकवनिका चापि महतीयं महाद्रुमा ।
इमामधिगमिष्यामि नहीयं विचिता मया ॥ ५६ ॥
जित्वा तु राक्षसान्देवीमिक्ष्वाकुकुलनन्दिनीम् ।
संप्रदास्यामि रामाय सिद्धीमिव तपस्विने ॥ ५७ ॥

स मुहूर्तमिव ध्यात्वा चिन्ताविग्रथितेन्द्रियः ।
उदतिष्ठन्महाबाहुर्हनूमान्मारुतात्मजः ॥ ५८ ॥
नमोऽस्तु रामाय सलक्ष्मणाय देव्यै च तस्यै जनकात्मजायै ।
नमोऽस्तु रुद्रेन्द्रयमानिलेभ्यो नमोऽस्तु चन्द्राग्निमरुद्गणेभ्यः॥५९॥
स तेभ्यस्तु नमस्कृत्वा सुग्रीवाय च मारुतिः ।
दिशः सर्वाः समालोक्य सोऽशोकवनिकां प्रति ॥ ६० ॥
स गत्वा मनसा पूर्वमशोकवनिकां शुभाम् ।
उत्तरं चिन्तयामास वानरो मारुतात्मजः ॥६१॥
ध्रुवं तु रक्षोबहुला भविष्यति वनाकुला ।
अशोकवनिका पुण्या सर्वसंस्कारसंस्कृता ॥ ६२ ॥
रक्षिणश्चात्र विहिता नूनं रक्षन्ति पादपान् ।
भगवानपि विश्वात्मा नातिक्षोभं प्रवायति ॥ ६३ ॥
संक्षिप्तोऽयं मयात्मा च रामार्थे रावणस्य च ।
सिद्धिं दिशन्तु मे सर्वे देवाः सर्षिगणास्त्विह ॥ ६४ ॥

रामायण—सुंदरकाण्ड—सर्ग १२–१३.

## ६६ बुद्धिर्यस्य बलं तस्य।

कस्मिंश्चिद्वने भासुरको नाम सिंहः प्रतिवसति स्म । अथासौ वीर्यातिरेका-न्नित्यमेवानेकान्मृगशशकादीन्व्यापादयन्नोपरराम । अथान्येद्युस्तद्वनजाः सर्वे सारङ्गवराहमहिषशशकादयो मिलित्वा तमभ्युपेत्य प्रोचुः । स्वामिन् किमनेन सकलमृगवधेन नित्यमेव यतस्तवैकेनापि मृगेण तृप्तिर्भवति । तत्क्रियतामस्माभिः सह समयधर्मः । अद्यप्रभृति तवात्रोपविष्टस्य जातिक्रमेण प्रतिदिनमेको मृगो भक्ष्यार्थं समेष्यति । एवं कृते तव तावत्प्राणयात्रा क्लेशं विनापि भविष्यत्यस्माकं च पुनः सर्वोच्छेदनं न स्यात् । तदेष राजधर्मोऽनुष्ठीयताम् ।

अथ तेषां तदाकर्ण्य भासुरक आह । अहो सत्यमभिहितं भवद्भिः । परं यदि ममाप्युपविष्टस्यात्र नित्यमेव नैकः श्वापदः समागमिष्यति तन्नूनं सर्वानपि भक्षयिष्यामि । अथ ते तथैव प्रतिज्ञाय निर्वृतिभाजस्तत्रैव वने निर्भयाः पर्यटन्ति एकश्च प्रतिदिनं क्रमेण याति । वृद्धो वा वैराग्ययुक्तो वा शोकग्रस्तो वा पुत्र-

कलत्रनाशभीतो वा तेषां मध्यात्तस्याहारार्थं मध्याह्नसमय उपतिष्ठते। अथ कदाचिज्जातिक्रमाच्छशकस्य वारः समायातः। स समस्तमृगैः प्रेरितोऽनिच्छन्नपि मन्दं मन्दं गत्वा तस्य वधोपायं चिन्तयन्वेलातिक्रमं कृत्वा व्याकुलितहृदयो यावद्गच्छति तावन्मार्गे गच्छता कूपः संदृष्ट। यावत्कूपोपरि याति तावत्कूपमध्य आत्मनः प्रतिबिम्बं ददर्श। तेन हृदये चिन्तितं यद्भव्य उपायोऽस्ति। अहं भासुरकं प्रकोप्य स्वबुद्ध्यास्मिन्कूपे पातयिष्यामि। अथासौ दिनशेषे भासुरकसमीपं प्राप्तः। सिंहोऽपि वेलातिक्रमेण क्षुत्क्षामकण्ठः कोपाविष्टः सृक्किणी परिलेलिहद् व्यचिन्तयत्। अहो प्रातराहाराय निःसत्त्वं वनं मया कर्तव्यम्। एवं चिन्तयतस्तस्य शशको मन्दं मन्दं गत्वा प्रणम्य तस्याग्रे स्थितः। अथ तं प्रज्वलितात्मा भासुरको भर्त्सयन्नाह। रे शशकाधम एकं तावत्त्वं लघुः प्राप्तोऽपरं वेलातिक्रमेण तदस्मादपराधात्त्वां निपात्य प्रातः सकलान्यपि मृगकुलान्युच्छेदयिष्यामि। अथ शशकः सविनयं प्रोवाच। स्वामिन् नापराधो मम, न च सत्त्वानाम्। तच्छ्रूयतां कारणम्। सिंह आह। सत्वरं निवेदय यावद्दंष्ट्रान्तर्गतो न भवसीति। शशक आह। समस्तमृगैरद्य स्वामिन् जातिक्रमेण मम लघुतरस्य प्रस्तावं विज्ञाय ततोऽहं पञ्चशशकैः समं प्रेषितः। ततश्चाहमागच्छन्नन्तराले महता केनचिदपरेण सिंहेन विवरान्निर्गत्याभिहितः। रे क्व प्रस्थिता यूयम्। अभीष्टदेवतां स्मरत। ततो मयाभिहितम्। वयं स्वामिनो भासुरकस्य सिंहस्य सकाश आहारार्थं समयधर्मेण गच्छामः। ततस्तेनाभिहितम्। यद्येवं तर्हि मदीयमेतद्वनं मया सह समयधर्मेण सर्वैः श्वापदैर्वर्तितव्यम्। चौररूपी स भासुरकः। अथ यदि सोऽत्र राजा ततो विश्वासस्थाने चतुरः शशकानवधृत्य त्वां तमाहूय द्रुततरमागच्छ येन द्वयोर्मध्याद्यः कश्चित्पराक्रमेण राजा भविष्यति स सर्वानेतान्भक्षयिष्यतीति। अतोऽहं तेनादिष्टः स्वामिसकाशमागतः। एतद्वेलातिक्रमकारणम्। तदत्र स्वामी प्रमाणम्। तच्छ्रुत्वा भासुरक आह। भद्र यद्येवं तर्हि सत्वरं दर्शय मे तं चौरसिंहं येनाहं मृगकोपं तस्योपरि क्षिप्त्वा स्वस्थो भवामि। उक्तं च।

भूमिर्मित्रं हिरण्यं च विग्रहस्य फलत्रयम्।
नास्त्येकमपि यद्येषां न तं कुर्यात्कथंचन॥

शशक आह। स्वामिन् सत्यमिदम्। स्वभूमिहेतोः परिभवाच्च युध्यन्ते क्षत्रियाः। परं स दुर्गाश्रयः। दुर्गान्निष्क्रम्य वयं तेन विष्कंभिताः। ततो दुर्गगतो दुःसाध्यो भवति रिपुः। तच्छ्रुत्वा **भासुरक** आह। भद्र दुर्गस्थमपि दर्शय चौरसिंहं येन व्यापादयामि। उक्तं च।

**जातमात्रं न यः शत्रुं रोगं च प्रशमं नयेत्।**
**महाबलोऽपि तेनैव वृद्धिं प्राप्य स हन्यते॥**

शशक आह। अस्त्येतत् तथापि तस्य सामर्थ्यमविदित्वा न युज्यते गन्तुम्। उक्तं च।

**अविदित्वात्मनः शक्तिं परस्य च समुत्सुकः।**
**गच्छन्नभिमुखो याति नाशं वह्नौ पतङ्गवत्॥**

**भासुरक** आह। यद्यप्येवं तथापि त्वं दर्शय तं चौरसिंहं यथा व्यापादयामि। शशक आह॥ यद्येवं तर्ह्यागच्छतु स्वामी। एवमुक्त्वाग्रे व्यवस्थितः। ततश्च तेनागच्छता यः कूपो दृष्टोऽभूत्तमेव कूपमासाद्य **भासुरक**माह। स्वामिन्कस्ते प्रतापं सोढुं समर्थः। त्वां दृष्ट्वा दूरतोऽपि चौरसिंहः प्रविष्टः स्वं दुर्गम्। तदागच्छ यथा दर्शयामीति। **भासुरक** आह। दर्शय मे दुर्गम्। तदनु दर्शितस्तेन कूपः। ततः सोऽपि मूर्खः सिंहः कूपमध्ये आत्मप्रतिबिंबं जलमध्यगतं दृष्ट्वा सिंहनादं मुमोच। ततः कूपमध्याद् द्विगुणतरो नादः समुत्थितः। अथ तेन तं शत्रुं मत्वात्मानं तस्योपरि प्रक्षिप्य प्राणाः परित्यक्ताः। शशकोऽपि हृष्टमनाः सर्वमृगानानन्द्य तैः सह प्रशस्यमानो यथासुखं तत्र वने निवसति स्म। अतोऽहं ब्रवीमि।

**बुद्धिर्यस्य बलं तस्य निर्बुद्धेस्तु कुतो बलम्।**
**वने सिंहो मदोन्मत्तः शशकेन निपातितः॥**

पञ्चतन्त्रम्.

## ६७ वर्षाकालः।

हें पावसाळ्याचें वर्णन **वाल्मीकीच्या** इतर सृष्टिवर्णनाप्रमाणेंच उत्तम प्रकारचें आहे.

